श्रीजैनयशोविजयग्रन्थमाला [८]




# मुद्रितकुमुदचन्द्रप्रकरणम्।

श्रीधर्कटवंशाम्भोधिसुधांशुश्रीपद्मचन्द्रसूनु-
श्रीयशश्चन्द्रकृतम् ।

काशीस्थ
श्रीयशोविजयजैनपाठशालातः
प्राकाश्यमानीतम् ।

तच्च
चन्द्रप्रभायन्त्रालये मुद्रापितम् ।
वीर सं० २४३२ ।

# मुद्रितकुमुदचन्द्रप्रकरणे

## पात्राणि

| | |
|---|---|
| महाराजजयसिंहः ... ... | गूर्जरेश्वरः सिद्धराजः |
| श्रीदेवसूरिः ... ... ... | श्वेताम्बराचार्यः (वादी) |
| श्रीकुमुदचन्द्रः ... ... ... | दिगम्बराचार्यः (प्रतिवादी) |
| श्रीपार्श्वदेवः, शोभनः ... ... | इतरौ |
| बन्दी ... ... ... ... | राजसाधारः (कुमुदस्य) |
| माणिक्यः, विजयसेनः, अशोकः ... | देवसूरिशिष्याः |
| मकरन्दः ... ... ... | कुमुदशिष्यः |
| वैतालिकः ... ... ... | देवसूरिसकाशादागतः। |
| राहुः, केतुः ... ... ... | कुमुदचं० परिचारकौ |
| थाहडः ... ... ... ... | साधुः देवसूरेः परिचारकौ |
| नागदेवः ... ... ... | श्राद्धः |
| उदयपालः ... ... ... | राज्ञः कश्चित् |
| गाङ्गिलः ... ... ... | गूर्जरेश्वरमन्त्री |
| श्रीपालः ... ... ... | पारिग्राहिकः कविः |
| प्रतीहारः ... ... ... | राज्ञः |
| वैतालिकः, मागधी ... ... | ,, |
| केशवः (त्रयी) ... ... ... | कुमुदचन्द्रशिष्यः |
| महर्षिः, उत्साहः, सागरः, रामः ... ... ... | राज्ञः सभ्याः |
| कविराजः (श्रीपालः) ... ... | देवसूरिसभ्यौ |
| भाभूः ... ... ... ... | |
| शीलाङ्कः... ... ... ... | दण्डनाथः |
| यशोधरः... ... ... ... | राज्ञः परिचारकः |
| वज्रार्गला ... ... ... | योगिनी |

---



श्रीपद्मचन्द्रसूनुयशश्चन्द्रकृत-

# मुद्रितकुमुदचन्द्रनाटकम् ॥

श्रेयःकुड्मलमांसलां त्रिजगतः कुर्वन्तु वाञ्छालतां,
व्याख्याभूमिजुषः शशाङ्कसुहृदो वीरस्य दन्तत्विषः ॥
दृप्यद्दुर्मतदन्तिकुम्भदलने क्रीडां समातन्वता,
कीर्णाः केसरिणेव लाञ्छनभवा मुक्तामणिश्रेणयः ॥ १ ॥

( नान्द्यन्ते सूत्रधारः )

सूत्र०—( सचमत्कारम् )• अहह ! मत्प्रवेशेऽपि प्रमोदपरिमलप्रेङ्-खोलिनी परिषत्, तथाहि—

वेल्लत्कोमलमञ्जरीसहचरं चेतो नियम्य क्षणा-
दालापान् प्रतिषिध्य सूक्तिमधुरान् सार्द्धं वयस्यैरपि ॥
मद्वक्त्रप्रविलोकनैकरसिका किंवा बहु ब्रूमहे ।
यत्सत्यं प्रतिबिम्बितेव लिखितेवास्ते समस्ता सभा ॥२॥

(वितर्क्य)-कमिव प्रबन्धमभिनेतुमुपक्रमे । (स्मरणं नाटयन्) अये श्रीसपादलक्षलक्ष्मीबिलासवलभीमूलस्तम्भायमान-दोःकन्दले, ऽङ्कपालीशयालुशाकम्भरीभूपालकराङ्गुली-किशलयितकूर्चकुन्तले, वारिष्ठश्रेष्ठिसीम्नि, धनदेवनाम्नि, परां बहुमानसम्पदमुद्वहन्त्यमी सभासदः, तत्तत्पौत्रसूत्रित-प्रत्यग्रप्रबन्धाभिनयेन चमत्करोम्येतच्चेतांसीति ।

( प्रविश्य पारिपार्श्वकः )

पारि०—भाव ! कः प्रबन्धोऽभिनेष्यते ? ।

सूत्र०—मारिष ! अस्त्यभिनवोक्तिभङ्गीतरङ्गितरसनस्यन्दनिझरणं मुद्रितकुमुदचन्द्रनाम प्रकरणम् ।

पारि०—कोऽस्य कविः ? ।

सूत्र०—तैस्तैर्बुद्धिसुधारसव्यतिकरैः शाकम्भरीभूभुजो-
येनाश्यां भुवि चेतसोऽप्यविषयामभ्युन्नतिं लम्भिताः ॥
स श्रीधर्कटवंशवारिधिसुधारोचिर्जगद्विश्रुतो-
यस्य श्रीधनदेव इत्यभिधया ख्यातः पिताऽभूत् पितुः ॥३॥

पारि०—किं स एषः-
यस्याराधनबुद्ध्युपागतमहासामन्तचक्रोल्लसद्-
वाहीकाश्वमुखान्तरालविगलल्लालाजलैः पङ्किला ॥
वेश्मद्वारवसुन्धरा प्रतिदिनं तावद् बभूवाद्भुतम् ।
तत्कर्णेजपमन्दिरेषु कमला द (भ्र) ष्टा स्खलन्ती पुनः ॥४॥

सूत्र०—अथ किं पुनः-
मल्लिस्रग्भिरिवावृताः सुरसरिन्नीरैरिव स्नापिताः ।
श्रीखण्डैरिव मण्डिताः कवचिताः कर्पूरपूरैरिव ॥
पीयूषैरिव सारिताः परिचिता द्राक्षारसौघैरिव ।
पीताः कुञ्चितलोचनैर्भणितयो विद्वज्जनैर्यत्पितुः ॥५॥

पारि०—( उपहस्य ) तत्किं पूर्वपुरुषपरम्परातः सुकविताऽवाप्तिः ? ।

सूत्र०—एवमेतत्, कारणशुद्ध्या हि कार्यशुद्धि, न महार्णवमन्दरेण रोहिणीरमणमपरः प्रसूते-
न प्रत्यग्रसुधासरःपरिसरे प्रेमाणमापद्यते ।

पातुं वाञ्छति शर्करानुभगितं नो गोस्तनीपानकम् ॥
उत्तंसीकृतलोचनां रमयितुं रामां न चोत्कण्ठते ।
यत्सूक्तिं श्रवणातिथिं विरचयन् विश्वो मनस्वी जनः ॥६॥
कर्ताऽनेकप्रबन्धानामत्र प्रकरणे कविः ।
आनन्दकाव्यमुद्रासु यशश्चन्द्र इति श्रुतः ॥ ७ ॥
( नेपथ्याभिमुखं विलोक्य )
आर्ये ! इतस्तावत् ।
( प्रविश्य दुर्मनायमाना नटी )

नटी०—आणवेदु अज्जो[१] ।

सूत्र०—किमिति चिन्तातपक्लान्तेवोपलक्ष्यते भवती ।

नटी०—अज्ज! धूया रमणीयत्तण रहस्स भूया मम त्थि विजयसिरी[२]
जं सोहग्ग समग्गं मुणिलोओ विहु अहिलसेइ ॥
तस्साए कए मए दुन्निवरा पारिभाविया संति[३] ॥८॥

सूत्र०—(उपहस्य) तत्किमेकामपि कन्यकां द्वयोर्वरयोर्दास्य(ति)सि ।

नटी०—अत्थि कुलीणो लीणो विवेय परिकलिय ललिय किरियासु
गुण रयण रोहणो मयण मोहणो नियय रूवेणं[४] ॥८॥
देवगुरू नामेण धामेण परिभविय तरुणतरणी ।
भद्द वओ वत्थाए कंठेण य, केवलं अहणो[५] ॥ ९ ॥

---

१ आज्ञापयतु आर्यः।
२ आर्य्य ! दुहिता रमणीयत्वरहस्यभूता ममास्ति विजयश्रीः ॥
३ यां सौभाग्यसमग्रां मुनिलोकोऽपिचाभिलषति ।
तस्याः कृते मया द्वौ वरौ परिभावितौ स्तः ॥
४ अस्ति कुलीनो लीनो विवेकपरिकलितललितक्रियासु ।
गुणरत्नरोहणो मदनमोहनो निजकरूपेण ॥ ८ ॥
५. देवगुरुर्नाम्ना धाम्ना परिभूततरुणतरणिः ।
भद्रपदोऽवस्थया कण्ठेन च, केवलमधनः ॥ ९ ॥

बीओ वियक्खणो विहु बाढं निल्लज्जिमाइ अवगूढो ।
विज्जा हंकारेण य तिणं व परिकलइ तियलोयं[1] ॥१०॥
नामेण कयरविंदू बिंदूरिव कलइ लच्छिवंते य ।
तुरयाइ च्छत्त चामर सुहासणाईण वित्थरओ[2] ॥११॥

सूत्र०-ततः ।

नटी०-तउ मह भयिणी रिद्धिविलासलोहेण कयरविन्दुणो दाउं अभिवंछइ विजयसिरिं, अहं तु पुण गुणपक्खवाइणी देवगुरुणो, 'ता किं न याणेमि परिणमईए सुहावहं ति[3]

सूत्र०-यदि वयं प्रमाणम्, तर्हि दीयते देवसूरोः नयाविनयबुद्धिबन्धुरता हि निदानमद्भुतायाः संपदः, अहंकृतिश्चोत्थापनायाश्चिर्विपद्धुजङ्गीनाम्- तथाहि-

कैलासाचलमुल्लसद्भुजबलप्रागल्भ्यकौतूहली ।
पाणौ कन्दुकतां नयन् शिखरतस्तत्कात्पतन्तीः शिलाः ॥
किंभशा करजावलीति चकितं व्यालोकयामास यः ।
प्राप्तः सोऽप्यतिदर्पसर्पवशतो निन्द्यां दशास्यो दशाम् ॥१२॥

नटी०-मह भयिणी क्खु एयं सुहासियं पढेइ[4] ।

तावत्पञ्चमकाकलीं कलयितुं कण्ठः समुत्कण्ठते ।
तावन्मुग्धमृगीदृशां स्मितरसश्चेतः समाकर्षति ॥

---

१ द्वितीयो विचक्षणोऽपि च बाढं निर्लज्जतायवगूढः ।
विद्याऽहंकारेण च तृणमिव परिकलयति त्रिलोकीम् ॥ १० ॥

२ नाम्ना कैरवेन्दुर्बिन्दूनिव कलयति लक्ष्मीवतश्च ।
तुरगादिछत्रचामरसुखासनादीनां विस्तरतः ॥ ११ ॥

३ तथापि मम भगिनी ऋद्धिविलासलोभेन कैरवे(न्दवे)न्दोर्दातुं अभिवाञ्छति विजयश्रियम्, अहन्तु पुनर्गुणपक्षपातिनी देवगु(रवे)रोः, तत्किं न जानामि परिणामे सुखावहमिति ।

४ मम भगिनी खलु एतत् सुभाषितं पठति ।

तावत्सूक्तिरसायनं सुखयति, श्रोत्रे कवीनां लुठ-
ल्लक्ष्मीर्यावदवेक्षते क्षणमपि प्रेमोर्मिणा चक्षुषा ॥१३॥

सूत्र०—श्लाघ्यैवं श्रीर्यदि स्निह्यति, परमसौ सुभटासिपट्टपट्टधारा-
पर्य्यटनलाम्पट्यपाटितं पदं न पारयति क्वापि निर्भर-
मवस्थापयितुं, अहङ्कारश्च विसर्जनहुङ्कारः सरित्पतिदुहितुः,
अपि च, द्विर्द्वादशकयोगः खलु कैरवेन्दुना समं विजय-
श्रियः परिहार्य्योऽयं यत्नतो ज्यौतिर्विद्भिः ।

नटी०—देवगुरुणा समं केरिसो मेलावो[1] ।

सूत्र०—( गणयित्वा सहर्षं ) तृतीयैकादशयोगः सुकृतैरवाप्यते ।

नटी०—( सानन्दं ) ता मह अहिलसियं वेव संपज्जेही[2] ।

( नेपथ्ये )

अये प्रत्यूषसमयः ।

गगनतरुरिदानीं शीर्णपर्णायमानं ।
विकिरति गततेजस्तारकाचक्रवालम् ॥
कलयति च नवीनं जालकं पल्लवाना-
मभिनवदिनसन्ध्यासान्द्ररागच्छलेन ॥ १४ ॥

दशनकरजपातान् सर्वतोऽङ्गेषु दृष्ट्वा ।
नवघुसृणरसेनाऽऽच्छाद्य तानाऽऽदरेण ॥
चकिततरलतारं दिक्षु चक्षुः क्षिपन्त्यो-
निजवसतिमयन्ते स्वैरचाराः पुरन्ध्र्यः ॥ १५ ॥

किं च ।

विधुनिधुवनलीलाक्रान्तिजातान् लिहानो-

---

१ देवगुरुणा समं कीदृशो मेलापकः ।
२ तन्ममाभिलषितमेव सम्पत्स्यते ।

वपुषि गगनलक्ष्म्यास्तारकस्वेदबिन्दून् ॥
कमलवदनजन्मा जृम्भमाणाब्जिनीनां ।
परिलसति समीरो वासरारम्भशंसी ॥ १५ ॥

अपि च ।

सच्चक्रनन्दनपटुः सविताऽयमस्य
श्रेयस्तनोतु जगतोऽम्बरसुप्रतिष्ठः ॥
संरुद्धनिर्वृतिपदश्री वियोगिनीना-
मस्तं ययौ कुमुदचन्द्ररुचेर्विलासः ॥ १७ ॥

सूत्र०—उपक्रान्तमेक नर्तकैस्तदेहि अनन्तरकरणीयाय प्र(त्य)यतामहे ॥

( इति निष्क्रान्ताः )

॥ प्रस्तावना ॥

( ततः प्रविशति सच्चक्रेत्यादि पठन् श्रीपार्श्वदेवः)

श्रीपार्श्वदेवः-( पुरोविलोक्य) सखे शोभन ! कुत्र त्वरिततरपादपातं प्रचलितोऽसि ?।

शोभनः—वयस्य ! ह्यस्तनेऽह्नि धर्मपुस्तकव्याख्यासमर्थनमहोत्सवे श्रीमदाशापल्लीवतंसकुवलये श्रीमन्नेमिजिनचैत्यालये भ्रातृराहडो मया सह गत आसीत् ।

पार्श्व०—वीक्षितौ तत्र युवां खलु मया ।

शोभ०—ततः श्रीदेवसूरेर्लोकोत्तरां स्फातिमालोक्य चमत्कृतेन, अद्य प्रातः कुमुदचन्द्राग्रोपविष्टश्राद्धसंसदि मद्बन्धुनाऽभिदधे-

रूपं मङ्गलयूपमुज्ज्वलयशोराशेः शमक्ष्माभुजो,
मुद्रा दर्शनमात्रपात्रनतया सा निश्चितं सोमसूः ॥
वेषः संवननौषधेरिव जटाश्चूर्णश्चरित्रश्रियो,
भङ्गिः काचन दुर्भगीकृतसुधा श्रीदेवसूरेर्गिराम् ॥१८॥

पार्श्व०–( सहर्षम् ) सखे! साधूदितं गुणज्ञशेखरेण युष्मत्सोदरेण-

आस्तां सुधा किमधुना मधुना विधेयं ।
दूरे सुधानिधिरलं नवगोस्तनीभिः ॥
श्रीदेवसूरिसुगुरोर्यदि सूक्तयस्ताः ।'
पाकोत्तराः श्रवणयोरतिथीभवन्ति ॥ १९ ॥

अपि च ।

बन्धो शोभन ! पक्षपातेनेक्ष्यते–
दृष्टिं न प्रहिणोति केलिकमले नालोकते पुस्तकं,
वीणां पञ्चमकाकलीकवचितां कर्तुं न संनह्यति ॥
उन्मीलन्नवसूक्तिसौरभभरे श्रीदेवसूरेर्मुखे,
विद्यानामधिदेवताऽनवरतं व्यापारयन्ती दृशौ ॥२०॥

शोभ०–ततोमद्भ्रातृभणितमाकर्ण्यामर्षधूमायमानमानसेन दिगम्बरेन्द्रकुमुदचन्द्रेण राजसाधारनामा बन्दीश्वरो देवाचार्यवसतौ प्रहितोऽस्ति, कौतुकेनाहमपि तत्र जिगमिषुः ।

पार्श्व०–किमेष बन्दी वक्ष्यति इति ममाप्यकुण्ठा श्रवणोत्कण्ठा, तदेहि तत्रैव गच्छावः ।

( इति निष्क्रान्तौ )

॥ शुद्धविष्कम्भकः ॥

( ततः प्रविशति वसतिमध्यगतो माणिक्यादिशिष्येभ्यस्तर्क-
शास्त्रव्याख्यामातिष्ठमानःश्रीदेवसूरिः,परिवारश्च,
बन्दी राजसाधारश्च )

बन्दी०—( हस्तमुदञ्च्य उच्चैः ) जयतु जयतु कुन्तलकलाविद्तुलाभिमानाचलदलनदम्भोलिदण्ड, चौडचतुरपाण्डित्यखण्डनप्रचण्ड, गौडगुणिगर्वसारङ्गशार्दूल, वङ्गविषयविदुषःमुखकालुष्यमूल,निषिद्धनैषधबुधदर्पान्धकार, यशःशेषीकृतकान्यकुब्जविद्वज्जनाहङ्कार, विशदशारदादेशकोविदमदच्छेदवैदुष्यपात्र, प्रगल्भमालवीयकुशलशेमुषीकुशलतालवनदात्र, प्रकृतिवाचाटलाटमुखघटितमौनकपाट, कृतकौङ्कणकविकुलोच्चाट, विक्षिप्तसपादलक्षदक्षपक्ष, जर्जरीकृतगुर्ज्जरजनगर्जितकक्ष, तार्किकचक्रचूडामणे, वैयाकरणकल्पतरणे, छात्रीकृतच्छन्दश्छेक, साहित्यलतासुधासेक, सरस्वतीहृदयहार, श्वेताम्बरविडम्बनप्रहसनसूत्रधार, चतुरशीतिविवादविजयार्जितोर्ज्जितयशःपुञ्जसमर्जितचन्द्र, कुमुदचन्द्रनाम वादीन्द्र !

हंहो श्वेतपटाः किमेष कपटाटोपोक्तिसंटङ्कितैः,
संसारावटकोटरेऽतिविकटे मुग्धोजनः पात्यते ॥
तत्त्वातत्त्वविचारणासु यदि वो हेवाकलेशस्तदा ।
सत्यं कौमुदचन्द्रमंह्रियुगलं रात्रिन्दिवं ध्यायत ॥ २१ ॥

माणिक्यः-( सरोषाङ्कुरं ) हंहो वैतालिक !

कः कण्ठीरवकण्ठकेसरसटाभारं स्पृशत्यंह्रिणा,
कः कुन्तेन सितेन नेत्रकुहरे कण्डूयनं काङ्क्षति ॥
कः सन्नह्यति पन्नगेश्वरशिरोरत्नावतंसश्रिये,
यः श्वेताम्बरदर्शनस्य कुरुते वन्द्यस्य निन्दामिमाम् २२

बन्दी—( माणिक्यवाणीमपकर्ण्य )

जीयादसौ कुमुदचन्द्रदिगम्बरेन्द्रो
दुर्वादिदन्तिमदनिर्दलनेन येन ॥
भेजे मुदा चतुरशीतिविलासभङ्गी-
सम्भोगचारुकरणैः सततं जयश्रीः ॥ २३ ॥

माणि०—( वक्तुमुपक्रमते )

श्रीदेवसूरिः—( सव्यथम् ) वत्स ! केयं प्रशममूले तपसि वर्तमानस्य कोपकल्मषोपश्लेषाभिलाषिणी धिषणा, निसर्गः खल्वयं कषायविषाणिनां प्राणिनां परनिन्दाकर्दमोपमर्ददोहदः समशत्रुमित्रमतीनां यतीनां चात्यन्तमनुचितः।

अपिच।

अपकृतिकृति कोपश्चेत्तदा किं न कोपे,
स्फुरति निशितधारे धर्मवल्लीकुठारे ॥
निजहृदयविवर्त्ति च्छेदयन् लाञ्छनं नो,
प्रकटितभुवनः किं नैव चन्द्रः कलङ्की ? ॥ २४ ॥

। किञ्च ।

भस्मीभवन्ति मतयः स्मृतयो गलन्ति
व्रीडास्त्रुटन्ति सुगुणाः शलभीभवन्ति ॥
हृन्मन्दिरं दहति मन्दधियां परोक्त-
निन्दा समिध्यति करज्वलिते क्रुधग्नौ ॥ २५॥

माणि०—भगवन् ! अयमस्मि मौनेन स्थितः।

बन्दी—हंहो श्वेताम्बर ! नायं क्षणः क्षमायाः

ज्वालाकराले ज्वलनान्तराले,
न्याय्यो वरं जीवितहव्यहोमः ।
न मानभङ्गाऽऽगमनाग्रदूतीं,
श्रोतुं तु युक्तं परवादिनिन्दाम् ॥ २६ ॥

देव०—अहो वागुजीविन् ! मानादिभङ्गायैवास्माकमभङ्गुरोऽयमाग्रहः ।

बन्दी—[ नाशां मोटयन् ] श्वेताम्बराग्रेसर ! एवमात्मन्यसामर्थ्यमुत्थापयन् किं निजश्रावकेभ्योऽपि न लज्जसे।

देव०—वैतालिकतिलक ! असमर्था एव वयं कलहकर्मणि ।

। किंच ।

मातृभ्रातृपितृप्रभृत्यविकलस्नेहाकुलोद्यज्जनं
सौधं धान्यधनोद्धुरं तृणमिव त्यक्त्वा धृतं यैर्व्रतम् ॥
तेषां संस्मृतिपुंश्चलीरतिकलादूतेषु मानादिषु
ब्रूतां हन्त भवानहो परिचयश्चेदौचितीमञ्चति ? ॥२७॥

बन्दी—भदन्त ! यदि ते न प्रतिपक्षविक्षेपाय हेवाकस्तर्हि किमयमहर्निशं कर्कशतर्कपरितर्कणविप्लवक्लेशः ।

देव०—बन्दिन् ! न प्रतिवादिकदर्थनाय कोविदानामादरः शास्त्रेषु किन्तु तत्त्ववि(चा)रणाय ।

बन्दी—( ऊर्ध्वमवलोक्य आकाशे लक्ष्यं बद्ध्वा ) आः दिगम्बर अम्बरचन्द्र कुमुदचन्द्र !

मनोरथः पूर्त्तिपथं कथं ते
मयातु वादिद्विपदर्पशान्त्यै ।

त्वत्कं यशो निःप्रतिभान् पुरैव
प्राप्ताग्रवादान् कुरुते विपक्षान् ॥ २८ ॥

देव०—दुःपूरा एव दुर्मेधसां मनोरथाः, दूरे खलु तृणसंदोहस्य दहनलङ्घनाय दुराशा ॥

बन्दी—(कर्णौ पिधाय) आः शान्तं पापं ! कुमुदचन्द्रोऽपि दुर्मेधाः?-

नैव ध्यायति शब्दशास्त्ररचनारत्नाऽऽपणं पाणिनिं,
चेतो न प्रहिणोति वादिविहिताऽऽतङ्के कलङ्केऽप्यहो ॥
सूक्तिं न स्मरतीन्दुशैशवसखीं श्रीकालिदासस्य च,
प्रेक्ष्य २ मुखं यदीयमधुना वाचां-पतिर्दैवता ॥ २९ ॥

देव०—अहङ्कारधूमान्धकारेणैवाववुद्धोऽस्माभिस्तस्य चेतसि विद्यालताप्लोषः, यतः-

न विद्या दर्पान्ध्यं स्फुटयति सुधांशूज्ज्वलधियां,
मषीवर्षं धत्ते क्वाचिदपि न माणिक्यकलिका ॥
न जम्बीरी जम्बूं जनयति न मल्ली कुवलयं,
न सूते शीतांशोर्द्युतिरनलकीलाजटिलितम् ॥ ३० ॥

बन्दी—देवसूरे !

यौष्माकीयेऽपि हि मते मया श्रुतमनेकशः ॥
दर्शनस्य तिरस्कारं ? सर्वस्थाम्ना निवारयेत्॥३१॥

देव०—( ईषदुपहस्य ) बन्दिराज ! निन्दापरे कस्मिंश्चिद्दुर्मतौ कोऽयमस्मद्दर्शनतिरस्कारः ।

तथा हि ।

चेत् श्वेताम्बरदर्शनस्य जगतोवन्द्यस्य निन्दाक्रमं,
कश्चित् कल्मषकश्मलः प्रकुरुते कस्तावताऽस्योत्सवः ॥

भंकुर्वन् कारिणो मदालसगतेः किं खण्डयेन्मण्डलो-
मूढः मौढरुचो रवेः परिकिरन् रेणुं गुणं कं श्रयेत् ॥३२॥

बन्दी—शम एव पुरस्कृतो भवता, तत्किं जल्पकेलीश्रद्धालुः प्रतिवक्तव्यः कुमुदचन्द्रः ? ।

देव०-इदमस्मन्मुखेन व्याहरणीयो नग्नाग्रणीः—

दिगम्बरशिरोमणे ! गुणपराङ्मुखो मास्म भूः ।
गुणग्रहफलं हि तद् हसात पङ्कजं यद्रमा ॥
ततस्त्यज मदं कुरु प्रशमसंयतान् स्वान् गुणान् ।
दमो हि मुनिभूषणं स च भवेन्मदव्यत्यये ॥३३॥

माणि०—बन्दीश्वर ! वाक्यमेकमस्मदीयमपि श्रावणीयो व्योमाम्बर-वरेण्यः ।

यथा ।

नग्नैर्निरुद्धा तरुणीजनस्य यन्मुक्तिरत्र प्रकटं रहस्यम् ॥
तत् किं वृथा कर्कशतर्ककेलौ तवाभिलाषोऽयमनर्थमूलः॥३४॥

बन्दी—माणिक्य ! अकुशलोऽसि माणिक्य शक्यविवेककर्मणि,
अनर्हः खल्वेवमुल्लुण्ठोक्तीनां दिगम्बरचक्रवर्ती—

यस्य वाणीतरङ्गिण्यां तर्ककेलीविलासिनः ॥
दृप्तो वादी मुटनमूलः को न कूलङ्कमायते ॥ ३५ ॥

देव०-बन्दिराज ! मौग्ध्यमधुरे वयसि वर्तमानो जल्पतु यत् किञ्चिन्माणिक्यः, तर्कगोष्ठीषु गरिष्ठतायाः किमुच्यते कुमुदचन्द्रस्य ?

( नेपथ्ये )

सुस्नाय माध्यन्दिनी संध्या संप्रति हि—

तीव्रैः पंकजिनीप्रियस्य किरणैः संतापितायाः क्षिते-
निश्वासैरिव पाकदेशजनितैर्धूमैर्निरुद्धं नभः ॥
प्रातर्ये च तमीजलार्द्रतनवो विस्तारयामासिरे
तेऽपि क्षोणिरुहां गुणेन विकटाश्छायापटाः संवृताः॥३६॥

आपि च ।

तप्तहरिदम्बरेण क्षणेन मन्येऽस्मिन् मध्यसन्ध्यायाः ॥
त्विच्छायां वीक्ष्य महीं नितरां परितप्यते तरणिः॥३७॥

देव०—मध्याह्नकृत्याय यतिष्यामहे वयम् ।

॥ इति निष्क्रान्ताः सर्वे ॥

## ॥ प्रथमोऽङ्कः ॥

## अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति मकरन्दः )

मकरन्दः—( पुरो विलोक्य ) सखे अशोक ! कथय कथमासते भवद्गुरवो देवसूरयः ।

( प्रविश्य )

अशोकः—वयस्य ! अतिक्रान्ते पञ्चमेऽह्नि वृद्धार्यिका भुजङ्ग-गोष्ठीगतेन कुमुदचन्द्रेण नर्तनादिना प्रभूतां प्रापिता विडम्बनाम् ।

मकर०—अहो अनुचितकारिता गर्विणोऽस्मद्गुरोः ।

अशो०—मदाध्मातानामन्धैव सदद्मनि धीः ।

मकर०—ततः २।

अशो०—मन्युपीडिता बाष्पोत्पीडाधौतगण्डफलका जराक्लीबतया द्विगुणगद्गदस्वरा समागता श्रीदेवसूरिचरणाभ्यर्णमभिहितं चानया ।

किं तेहिं कुविज्जेहिं, निरत्थयं ससत्थवाहीहिं ॥
जे वाय-लंघियाणं, मयज्जरं निंति नो वसमं[1] ॥ १ ॥
ही कस्स पुरोऽहं पुक्करेमि असक्कत्तया महं पहुणो ॥
निय सासण निक्कारे, जो वयरइ सो वरं सुगओ[2] ॥२॥

मक०—अहो हृदयंगममभिहितमार्ग्यिकया, ततः—

अशो०—ततः किमेतदिति पृष्टाऽसौ देवसूरिणा, निवेदितं चानया कुमुदचन्द्रदुर्विलसितं, उत्तेजितं च पार्श्ववर्तिना माणिक्येन ।

शमेन परिगृह्यते सुकृतमज्जनः सज्जनः,
शठस्तु हठकर्मणा लुठति पादपीठे परम् ॥
पयो हि भुजगः पिबन् गरलमुद्गिरेत् केवलं,
महौषधिवशात् पुनः कमलबालनालायते ॥ ३ ॥

मक०—एतदाकर्ण्य किं प्रतिपन्नं देवसूरिणा ?—

अशो०—दुर्वादिगर्वगजसंयमनाङ्कुशश्रीः,

---

१ किं तैः कुवैद्यैः निरर्थकं स्वशास्त्रवाहिभिः ।
ये वातलङ्घितानां मदज्वरं नयन्ति नोपशमम् ॥

२ ही कस्य पुरोऽहं पूत्करोमि अशक्तता महती प्रभोः ।
निजशासनन्यक्कारे यो वैरयति स वरं सुगतः ॥

श्वेताम्बराभ्युदयमङ्गलबालदूर्वा ॥
श्रीदेवसूरिसुगुरोर्भ्रुकुटीर्ललाट-
पट्टे स्थितिं व्यतनुत प्रथमावतारम् ॥ ४ ॥

सरोषविषादोद्वेदमन्दमुदितं च—

आकण्ठशोषपरिपोषफलः प्रमाण-
व्याख्याश्रमो मयि बभूव गुरोर्जनस्य ॥
एवं विधान्यपि विडम्बनविङ्वराणि
यः शासनस्य हहहा मसृणः शृणोमि ॥ ५ ॥

मक०--अहो आश्चर्यं—

मुकुलयति विवस्वानब्जिनीं किं कदाचित्,
कलुषयति किमिन्दुर्दिग्वधूनां मुखानि ॥
कलयति किमु लोष्टः पल्लवोल्लासलीलां,
यदुपशमनिमग्ने देवसूरौ प्रकोपः ॥ ६ ॥

अशो०--पीयूषप्रकृतावपि मथनातिशयाभियोगयोगेन।
क्षीराम्भोधिगर्भे किं नाभवदविरलं गरलम् ॥ ७ ॥

मक०--एवमेतत्, दृश्यते सुधासूतेरपि कंटकोट्टङ्कनकारिषु कमलेषु क्लमोपजनकत्वं, ततः--

अशो०--ततो भणिता भगवता वृद्धार्यिका, महानुभावे! मा विषीद प्राप्स्यति स खलो दुर्विनयस्य फलम्। ततोऽतिमात्रमन्युरूक्षाक्षरमाभाषितमार्यिकया—भयवं! निरत्थयाभिहाण देवसूरे! लहिस्सइदि सो पावो दुव्विणयस्स फलं, लहिस्सदि अ भवंपि उवसमरसायण फलं,

केवलं तुह्माणं तपुच्छयपत्थारो किंपि फलं पाविस्सदित्ति न याणामि[1] ॥

मकर०--नूनं सिक्तमनया सूक्तिसारिण्या देवसूरेरहङ्कारबीजं, ततः--

अशो०--ततो भणिता भगवता आर्यिका, महाशीले! शासनोदात्तप्रभावनोदर्कं भविष्यतीत्यदो भवद्भाषितम्, तदलमतिमात्रं संतापेन। आदिष्टश्च तदानीमेव शिष्यो माणिक्यो, यथावरसंप्रेष्यतां श्रीश्रमणसंघकृते श्रीश्रीपत्तनेऽस्माद्विज्ञप्तिका, यथा, श्वेताम्बरदर्शनविडम्बनप्रहसनसूत्रधारेण कुमुदचन्द्रनाम्ना दिगम्बरेण प्रतिपन्नवादमुद्राः सत्वरं तत्रागमिष्यामो वयमिति ॥

मकर०-उन्मिषितं चिरादेवसूरेरहङ्कारहुङ्कारेण।

अशो०-प्रेषिता च तदानीमेव माणिक्येन निर्दिष्टविज्ञप्तिका, समागतश्च तृतीयदिवसे श्रीश्रमणसंघलेखः।

मकर०-किमत्र लिखितम्?।

अशो०-श्रीवीरजिनराजचरणसरोजयुगलमानम्य श्रीमदणहिल्लपत्तनात् जयश्रीश्रमणसंघ आशापल्लीस्थानके श्रीमद्देवाचार्य्यमादिशति-

यथा।

गुणचन्द्रजयाज्जनतः प्रवादिनक्राकुले भवाम्भोधौ ॥
त्वं वत्स! कर्णधारो जिनशासनयानपात्रस्य ॥ ८ ॥

---

१ भगवन्! निरर्थकाभिधान देवसूरे! लप्स्यते स पापो दुर्विनयस्य फलं, लप्स्यते च भवानपि उपशमरसायनफलं, केवलं युष्माकं तप उच्छ्रयप्रस्तारः किमपि फलं प्राप्स्यते इति न जानामि।

देवाचार्यबलाग्रयुक्तः शासनस्य किलार्हताम् ॥
प्रभावनासरोजाक्ष्या पाणिग्रहमहोत्सवः ॥ ९ ॥

अपि च।

वत्स! नाद्यतनी ते प्रतिष्ठा—

पौलोमीपतिमन्त्रिणोऽपि न मतिर्यत्र प्रगल्भायते;
प्रज्ञा नोशनसोऽपि यत्र लभते मध्यप्रवेशप्रभाम् ॥
भङ्क्त्वा तं बत दुःप्रयोगमजयद् यः शैववादीश्वरम्,
तस्य श्रीमुनिचन्द्रसूरिसुगुरोः किं त्वं न शिष्याग्रणीः? ॥१०॥

तत्प्रियं नः प्रतिपन्नवादमुद्रस्य वत्सस्याऽऽगमनमिति।

मकर०—ततः २।

अशो०—ततः श्रीसङ्घाऽऽज्ञाप्रसादप्रमोदमेदुरपुलकेन श्रीमद्देवसूरिणा तत्क्षण एव कुमुदचन्द्रपार्श्वे वैतालिकं प्रेष्य शुभमुहूर्त्ते कृतं प्रयाणकम्।

मकर०—(सशिरः कम्पम्) अदीर्घसूत्रता हि विजिगीषूणां सत्यंकारः सत्कार्यसिद्धेः, शकुनानि कीदृशान्यभवन्?।

अशो०—सखे! श्लाघनीया शकुनावली—

तथाहि।

नयनविषयं जातश्चाषः श्रुतं शिखिशब्दितं,
तरुणहरिणश्रेणी हर्षात् प्रदक्षिणमागता ॥
तुहिनकिरणक्षेत्रे भानुर्महोदयमागतः,
प्रकृतिमृदुलो वायुः पृष्ठानुगश्च विजृम्भितः ॥११॥

मकर०—अहो प्राशस्त्यं शकुनानाम्।

अशो०--किं बहुना भाषितेन-

गान्धारध्वनिगीतपीतहृदये नृत्यत्कुरङ्गेक्षणा-
वर्गाक्षिप्तजनेक्षणे परिलसद्वादित्रनादोदये ॥
आरूढा हसितामरेश्वरगृहच्छायाकथे सद्रथे,
मूर्त्तिस्तीर्थकरस्य दुःखमथनी जाता सुखे संमुखी ॥१२॥

मकर०—श्रीदेवतादर्शनेन दैव्यपि कला काऽपि संपत्स्यते देवसूरेर्वादसंसदि ।

अशो०—कोऽत्र सन्देहः ।

मकर०—सखे ! कमनयोर्मध्ये श्वेताम्बरदिगम्बरयोर्वरिष्यति विजयश्रीरिति संदेहदोलातरलमस्मन्मनः ।

अशो०-यदि शकुनानि प्रमाणं तदा विजयी श्रीश्वेताम्बरशिरोमणिः ।

किंच ।

यन्मूर्त्तिप्रतिभैव वादिविशदव्याहारसंहारिणी,
यस्याभ्याससरित्पतौ च सकला शास्त्रावली शुक्तिका ॥
माहात्म्यं च यदीयमन्धतमसां ? दैपीं कलामाश्रितं,
भ्रातश्चिन्तय देवसूरिसुगुरोः किं तस्य नात्यद्भुतम् ? ॥१३॥

अपि च ।

वादं वादं वदनकमले वल्लकीं सूक्तिदेवी,
शिष्यव्याख्याविरचनमिषात् क्रान्तिमालम्ब्य यस्य ॥
स्नात्वा चेतःसरसि करुणानिर्भरे स्वादयित्वा,
सिद्धान्तोक्तीः कलयति ततो दृग्गवाक्षे विलासम् ॥१४॥

तमपि मुक्त्वा किमन्यत्र रंस्यते विजयश्रीः ? ।

मकर०-वयस्य ! मैवं वोचः निर्व्यूढानेकान्तवादिविजयकेलि-
दुर्ललितस्तत्रभवान् कुमुदचन्द्रः—

पश्य ।

यस्मिन् जल्पति दन्तदीधितिलसज्ज्योत्स्नाविलासादिव,
प्राप्ते हृत्कमले निमीलिततया कुब्जत्वदुःस्थां दशाम् ॥
तद्गर्भादिव गत्वरेण विदधे दुर्वादिनामानने,
वैलक्ष्यभ्रमरव्रजेन सहसा मालिन्यपङ्कप्लुतिः ॥१५॥
सोयमनभिज्ञः पराजयकिम्वदन्त्याः कुमुदचन्द्रवादीन्द्रः ।

अशो०-भवत्वेहि तावत्किं, श्रीदेवसूरिणा वैतालिकमुखेन भा-
णितमाकर्णयामः कुमुदचन्द्रोपाश्रये ।

( इति निष्क्रान्तौ )

॥ शुद्धविष्कम्भकः ॥

---

( ततः प्रविशति स्वोपाश्रयमध्यगतः सिंहासनासीनः कुमुदचन्द्रः )

कुमुदचन्द्रः—(पुरोऽवलोक्य) कः पुनरयं प्रविशति ? ।

( प्रविश्य )

वैतालिकः—( उच्चैः ) आशाम्बरेश्वर ! प्रहितोऽस्मि श्रीदेवसू-
रिणा, भाणितं च-

नास्माकं हृदि दर्पसर्पगरलोद्गाराः स्थितिं तन्वते,
न्यत्कारं तु न शासनस्य कलयाऽप्यालोकितुं शिक्षिताः ।
तत्तूर्णं समुपैहि सिद्धनृपतेरग्रे हरिष्यामहे,
तीक्ष्णैर्युक्तिमहौषधव्यतिकरैस्त्वत्तुण्डकण्डूचयम् ॥१६॥

कुमुद०—(सहर्षम्) मञ्जरितो मम मनोरथपृथिवीरुहः फलितोऽद्य वृद्धार्यिकया नटनदीपनविधिः ।

अहो मद्भाग्यानां श्रयति परिपाकं व्यतिकरः,
चिरात् प्रीतिस्निग्धां रचयति विरञ्चिर्मयि दृशम् ॥
यदस्मिन् दुर्भिक्षे कलियुगविलासे तु सुधियां,
ममोत्पन्नस्तर्काभ्युदयभणितीनां तरुणिमा ॥ १७ ॥

(पुनः सखेदमात्मानं प्रति)

रे चेतस्त्यज कौतुकोत्तरलतां नायं गुरुः स्वर्गिणां,
कोऽपि श्वेतपटस्तु नाम सदृशं लब्ध्वाऽभवद् दुर्मदः ॥
सार्द्धं तेन च कीदृशो बत भवेन्मे तर्ककेलीरसः,
कीदृक्केसरिणः कुरङ्गपृथुके स्याद्विक्रमोपक्रमः ॥ १८ ॥

वैता०—मा काष्ठाम्बर ! तं तृणाय गणय श्वेताम्बरस्वामिनं,
विख्यातो गुणचन्द्र इत्यभिधया दर्पोद्भटो दिक्पटः ॥
अर्णोराजनरेश्वरस्य पुरतो यस्योल्लसद्युक्तिभि-
र्जिग्ये शैशवपांशुखेलनवयस्याभिः सुखं सूक्तिभिः ॥ १९ ॥

कुमुद०—(सावहेलम्) आः वैतालिकापसद ! ममाप्यग्रतोदिगम्बरदर्शनतिरस्कारमाविष्करोषि ।

जाड्यं वितन्वन्नपि तापदायी स्तम्भं प्रकुर्वन्नपि कम्पकारी ॥
भूतज्वरोऽहं विषमः सदर्पं कं वादिनं साश्रुदृशं न चक्रे ॥ २० ॥

वैता०—(उपहस्य) कुमुददोषाकर ! सत्यमसि त्वं ज्वरः, परं न पावनः यतो न स्नेहेन प्रशान्तोऽसि, नापि पैत्तिकः कथमपरथा मृद्वीकामधुराभिरपि ताभिर्भणितिभिर्न विरतोऽसि, श्लैष्मिकस्तु सम्भाव्यसे, स च प्राप्स्यसि देवसूरि-

प्रतिभोष्मणा पापच्यमानः प्रविलयं, यदि वा वेलाज्वर इव स्वगृहज्वर इवायं न प्राप्नोति प्रवेशमपि सदसि सिद्ध-राजस्य ।

स हि राजा ।

रक्षःसंक्षोभदक्षः परिदलितमदोत्तालवेतालमालो,
झोटिङ्गोन्मोटनैकप्रकटभुजपटुर्भ्रूकुटिभ्रष्टभूतः ॥
शाकिन्युत्राससारः प्रबलपरिलसद्योगिनीमेलकारः,
स्वैरं वीरश्रियामास्वदति करगृहीताऽसिपट्टः श्मशाने ॥२१॥

कुमुद०—(सकोपताम्रम्) वैतालिककुलकलङ्क! किमदृष्टराजस-भोऽपराभूतवादिवृन्दश्च कुमुदचन्द्रः ? ।

मयि वागीश्वरीसूनौ सलीलमपि जल्पति ॥
दर्पः परिगलत्येव सह स्वेदेन वादिनाम् ॥२२॥

मयि वादिनि सद्बुद्धिवधूविरहितैरिव ॥
ध्रुवं शौद्धोदनैः शिष्यैर्धारितः पाटलः पटः ॥२३॥

मज्जल्पाभाववाल्लभ्यादभावस्यापि मानताम् ॥
भाट्टाः प्रकटयामासुर्न पुनः कारणान्तरात् ॥२४॥

तत्त्वामृतमुचां वाचां मम दूषणदुष्टता ॥
नास्तीति वादिभिः कैश्चिन्नास्तिकत्वे व्यवस्थितम् २५

मयि जल्पत्यनालोक्य कस्याप्येकस्य कौशलम् ॥
शाङ्करैः स्वीकृता मन्ये सन्निकर्षस्य मानता ॥२६॥

प्रगल्भाभावमालोक्य मदग्रे वादिमण्डलम् ॥
कापिलाः कल्पयामासुः प्राकृतं जगदप्यहो ॥२७॥

मज्जल्पज्वलनज्वालातापितानां प्रवादिनाम् ॥

मदः पारदवत्तूर्णं प्रणश्यन्नैव दृश्यते ॥२८॥

वैता०—पारद एव देवसूरिर्भवोदन्वतः, परं कवलितानन्तगुण चन्द्रगर्वधातुरगम्यः प्रतिवादियुक्तिज्वालानाम् ।

कुमुद०—आः बन्दिकुलावस्कर, दुर्मुखशेखर! तदेव पुनस्तरां दिगम्बरदर्शनदलनमुद्भावयसि (सविषादं च)

अहो भवाब्धौ किन्नाम जीवद्भिर्नानुभूयते ॥
तिरस्काराङ्कुरं कर्णे शासनस्य ममापि यत् ॥२९॥

वैता०— गेहे नर्दितया पूर्णे? तूर्णं प्रचल साम्प्रतम् ॥
त्वरते देवसूरीणां वाणी वादिमदच्छिदे ॥३०॥

कुमुद०—(सौत्सुक्यम्) कस्कोऽत्र सुखासनवाहिषु ?।

( प्रविश्य )

राहुः—अहं चिट्ठामि समादिसतु सामी राहुडः[१] ।

कुमुद०—(सखेदमात्मगतम्) कथं प्रथममेव राहोः प्रवेशः (प्रकाशम्) अरे! प्रगुणीयतां सुखासनम् ।

राहुः-एवं करियदि[२] ।

( इति निष्क्रान्तः )

कुमुद०—(त्वरामभिनयन्) अरे किं नाद्यापि सुखासनमायाति?।

( प्रविश्य )

केतुः—( कर्णे ) एवमेवम् ।

कुमुद०-आः कोऽयं श्लेष्मविकारः क्षुच्छन्दः,कः खलु शब्दार्थयो-

१ अहं तिष्ठामि, समादिशतु स्वामी, राहोः ।
२ एवं क्रियते ।

र्वास्तत्रसम्बन्धः, अन्यथा वयं तेन श्वेतभिक्षुणा विक्षिप्ता इति वचनोच्चारेणापि किमर्थस्तथात्वं प्रथते ? ।

तथाहि ।

जरत्तृणकुटीरके शटितवस्त्रखण्डाऽऽवृतः,
स्फुरद्धिमसमीरणप्रवणदन्तवीणाक्वणः ॥
समस्तविनिमीलितावयवगोलकाकारभाक्,
भजेन्न हत दुर्गतो दहननामतो निर्वृतिम् ॥३१॥

तदाऽऽनयत त्वरितमेव सुखासनं कलङ्कः खल्वयं निरर्गलः सकलवादिकुञ्जरस्य मम प्रतिवादिपृष्ठगमनं (पुनःसाहङ्कारं) पृष्ठमेव वा ऽर्दयाति वादिनः कुमुदचन्द्रस्य, क्व नामाद्भुतवाग्मि-विरहदुर्भगे कलियुगे तादृशी प्रतिभाजलनिर्झरा भारतीसरित् यां न कलुषयति कुमुदचन्द्रकुञ्जरः ? ।

वैता०--तावत् कुमुदचन्द्राह ! गर्ज गर्जितमूर्जितम् ।
न देवसूरिसिंहस्य यावद्गर्जितपुञ्जितम् ॥३२॥

कुमुद०--आः वैतालिक नालिक ! अवध्योऽसीति किमातितरां प्रगल्भसे ।

(प्रविश्य गृहीतसुखासनौ राहुकेतू)

राहुकेतू--आरोहदु सामी सुहासणं[1] ।

कुमुद०-(आरुह्य नेपथ्ये गमनं नाटयति विभवतश्च परिच्छदः-पुरोविलोक्य ससंभ्रमम्)

हिंसापिशाच्याः किमयं कटाक्षः किं कालरात्रेरसनागुणोऽयम् ॥
किं शृङ्खलेयं कलिकुञ्जरस्य? ज्ञातं, भुजङ्गोऽयमिह प्रयाति ॥३३॥

---

१ आरोहतु स्वामी सुखासनम् ।

परिजनः-स्वामिन् ! मार्गगमनभङ्गोऽयं भुजङ्गमः ।

कुमुद०-(सहर्षम्) अगम्यो भुजङ्गानां विनतानन्दनः कुमुदचन्द्रः, कुण्ठताऽवगुण्ठिताः खलु कुलिशोपलविलेखने शशिमुखीनां नखाङ्कुराः, पार्श्वपरमेश्वरशिरोऽलङ्कारस्य हि भुजङ्गपुङ्गवस्य गोत्रिणां दर्शनमपि विपुलं मङ्गलं, तदलं विलम्बेन ।

( इति निष्क्रान्ताः सर्वे )

## ॥ द्वितीयोऽङ्कः ॥

## अथ तृतीयोऽङ्कः ।

( ततः प्रविशतः साधुस्थाहडो नागदेवश्च )

थाहडः--(सहर्षम्) साधो नागदेव ! पल्लवितपुण्यपादपावावां, यन्निजहस्ताभ्यामाशाम्बरशिरोमणेः कुमुदचन्द्रस्यावलम्बनपत्रं पाटितवन्तौ ।

नागदेवः--सखे थाहड ! सर्वं समञ्जसं, परमनिष्टाशङ्कीनि सुहृन्मनांसि भवन्तीति बिभेमि खल्वहं क्षुद्रविद्यावैशारद्यडम्बरा दिगम्बरास्तद्यदि कथमपि दैवाद्दिगम्बरो विजयते, तदा गुरुलाघवलज्जया पातालमूलेऽपि नास्माकमवस्थितिरिति ।

थाह०-आः शान्तममङ्गलाऽऽशङ्कया, नाऽऽतङ्काय किल व्यालः कलापिनः ।

तपःप्रभापराभूताः स्फुरन्नयनतेजसि ।
न क्षुद्रविद्याखद्योताः सुप्रभौ प्रभवन्ति ते ॥ १ ॥

अपिच ।

किं नावगतं भवता—

भूताऽऽली भयमेति याति विलयं वेतालकेलिक्रमः,
क्रान्तिः शान्तिमुपैति जीर्यति महाघोरस्तृतीयज्वरः ॥
धत्ते वृश्चिककालनागगरलज्वाला क्षणात् संक्षयं,
पादक्षालनवारिसंगवशतः श्रीदेवसूरिप्रभोः ॥ २ ॥

नाग०--सखे ! आबालचन्द्रचारुनिरतिचारब्रह्मचारिणस्तत्र-भवतः सत्यमेवेदं न प्रवाद एव श्रीदेवसूरेः, परं मया श्रुतं मुखबन्धविद्यां जानाति स गगनाम्बराग्रणीस्तेन मनागाशङ्कते मदन्तःकरणम् ।

थाह०--आसीदेवं गुणचन्द्रस्यापि मुखबन्धवैदग्ध्यप्रसिद्धिः

परम्—

अर्णोराजनरेन्द्रसंसदि तदा दिग्वाससां स्वामिनो,
यद्वाग्वीचिभिराहतस्य निरगाद्दर्पोष्मणः प्रौढिमा ।
चित्रं त्वेतदभूदमुष्य वदने यद् वल्गितः कालिमा,
स्वेदोऽङ्गेषु विजृम्भितोऽधरपुटे शोषः समुन्मीलितः ॥ ३ ॥

तदस्य भगवतः श्रीदेवसूरेः प्रसादेन द्रक्ष्यामो वयमात्मशासनसमुन्नतिं, नताङ्गीप्रवेशमाङ्गलिक्यहरितालिकाङ्कुरमण्डलीमिव पराजयदग्धदिगम्बरवदने दर्शशर्वरीशैशवसखीं श्याममषीम् ॥

नाग०—एवमस्त्वस्मद्भाग्यसौभाग्येन ।

थाह०—( पुरः परिक्रम्य सविमर्शम् ) कथं समागता वयं राजमन्दिरद्वारम्, ( सचमत्कारम् )

साधोऽवधारय श्रीसिद्धराजराज्यसमृद्धिम्—

क्रीडत्कुञ्जरगण्डमण्डलगलद्दानोर्मिभिः पङ्किले,
राजद्वारि कृतास्पदा खुरततिर्नो वल्गिनां वाजिनाम् ॥
किन्त्वेषा प्रतिपक्षपार्थिवचमूचञ्चत्प्रतापानल-
ज्वालानां प्रतिबन्धिनी विजयते मान्त्री ठकराऽऽवलिः ॥४॥

नाग०—किमुच्यते नयविक्रमचक्रचारिणो गुर्ज्जरराजस्य ? यस्य रथस्य स्वयं निरुपमप्रभावातिथिः सिद्धराजसारथिः; अस्य हि राज्ये नताङ्गीमध्यभागस्यैव दुर्बलस्य बलिभिराक्रमणम्, लक्ष्मीवन्मन्दिराण्येव परबलभीनि, कामुकमतिरेव कुचस्थानुसारिणी, व्याकरणेष्वेव पितृव्यभ्रातृव्यमातुलादीनां निपातनम् ।

थाह०—ईदृगेवायं राजा-

तुच्छाहारतयाऽध्वलङ्घनवशाद् यस्य प्रतापानल-
प्लुष्टानां तनुषु द्विषामजनि या दौर्बल्यदुःस्था दशा ॥
सा तेषामुपकारकारणमभूदत्यन्तसङ्कीर्णकाऽ-
रण्यक्ष्माधरमौलिदुर्गमदरीगर्भप्रवेशक्रमे ॥ ५ ॥

नाग०—( पुरोविलोक्य ) कथमुदयपालः श्रीसिद्धराजराजमन्दिरादित एवाऽऽयाति ।

( प्रविश्य )

उदयपालः—( तौ प्रतिमुखं जल्पति ) आकारितौ द्वावपि श्रीदेव-

सूरिकुमुदचन्द्रौ देवेन श्रीसिद्धराजेन, कृता सभ्यव्यवस्था।

नागदेवथाहडौ—ततः।

उदय०—ततो देवेन द्वावपि पक्षौ यशोधरराजनामानं प्रतीहारावयवं दत्वा विवादसम्बन्धलेखनाय, श्रीकर्णे प्रेषितौ स्तः, तदाऽऽगच्छतं युवां, भगवतः पार्श्ववर्तिनो भवामः श्रीकरणे।

( इति निष्क्रान्ताः )

॥ विष्कम्भकः ॥

( ततः प्रविशति कुमारश्रीकरणगतः सचिवोगाङ्गिलः श्रीपालप्रभृति पारिग्रहादिवर्गश्च एकत, एतदग्रतः कुमुदचन्द्रोऽन्यतश्च देवाचार्यस्तत्परिवारश्च )

सचिवः—( देवसूरिमालोक्य सेर्ष्यं सप्रहासं च )

दन्तानां मलमण्डलीपरिचयस्थूलंभविष्णुस्ततिः,
कृत्वा भेक्षकपिण्डभक्षणविधिं शौचं किलाऽऽचाम्लतः॥
नीरं साक्षि शरीरशुद्धिविषये येषामहो कौतुकं,
तेऽपि श्वेतपटाः क्षितीश्वरपुरः काङ्क्षन्ति जल्पोत्सवम् ॥३॥

देवसूरिः—भवादृशेषु परमनीतिसूत्रधारेषु धीवरत्वेन प्रहसितसुराधिपेषु विज्ञातशिष्टदुष्टपटलपटुदृष्टिषु न किंचित् श्वेताम्बरदर्शनम्।

सचि०—श्वेतपट! मास्म कोपोत्कटो भूः। शौचाचारविचारणा

क्रियमाणाऽस्ति । निषिद्धः खलु मलक्लिन्नानां भूपालसभाप्रवेशः ।

देवसू०—( सोत्प्रासम् ) सदा मीमांसासक्ता भवन्तः, प्रतिषिद्धमेव राजसभाऽवस्थानं मुनीनां, परं शौचाचारविचारणाचतुर सचिवेश्वर ! अन्तरङ्गबहिरङ्गयोरन्तरङ्गो विधिर्बलवान् ।

विमृश्य विमृशाम्भोभिः शक्योऽपसारयितुं न यै-
जठरपिठरीक्रोडस्थेमाऽप्यहो मलपह्लवः ॥
कथमिव सदा तिष्ठन्नात्मन्यरूपिणि तैरहो,
परिदलयितुं पार्य्योऽनार्य्यः स पातककर्दमः ॥७॥

तदन्तःशुद्धानां बहिःशरीरसंस्कारमण्डनाऽऽडम्बरपरिहारो मुनिमतल्लिकानामलङ्कारः ।

यतः ।

अन्तर्नीरं जितक्षीरं बिभ्रद् भूतार्त्तिशान्तये ।
पयोदः किं न मोदाय ? बहिर्मालिन्यभागपि ॥ ८ ॥

अल्पेतरतोयतोदिनां च पावनत्वे यादसां विजयः ॥

सचि०—ब्रूतां कोऽपि, किञ्चिन्न पक्षपातेन वयमाचक्ष्महे, विप्रजनादृते न परं पावित्र्यम् ।

देवसू०—( सान्तर्हासम् ) गाङ्गिल ! किं नस्तया चिन्तया ? परं प्रस्तावपतितं तु न पार्य्यते परिहर्तुम्—

यादोऽङ्कशोणितकषायितचीवराणां,
तन्मांसभक्षणविचक्षणदक्षिणानाम् ॥
विद्वन्निकायगुणानन्दनकोविदानां

पावित्र्यमुत्तममहो ! द्विजसत्तमानाम् ॥ ९ ॥

सचि०—( उपहस्य ) नेपथ्यमपि पवित्रं सितवाससां—

वेषः कोऽपि तुरुष्कसंततिभवः कक्षान्तरे लम्बित-
श्छायामाश्रयते गतासुकपशोर्जीर्णोर्णिकापोट्टलः ॥
अन्धानामिव लष्टिका करतले मुण्डं समुल्लुञ्चितं
युक्तं केवलमास्यमुद्गतमलं यद्वस्त्रखण्डाऽऽवृतम् ॥ १० ॥

देवसू०—हंहो नागरिक !

मुखं दोषाकरो यासामुत्पले यद्विलोचने ॥
यद्गतिर्जितमातङ्गा तासां वेषः सुखायते ॥ ११ ॥

अपि च ।

अङ्गोद्वर्तनबन्धुरः परिलसन्नन्यार्थबद्धस्पृहः
प्रागल्भीं नखविक्रियासु कलयन् दान्तक्रियाकोविदः ॥
नित्यं नाभिनिवेशदर्शनपटुः, कंदर्पशिक्षाक्षम-
श्चेतस्ते हरते गुणो मृगदृशां नो सद्यतीनां पुनः ॥१२॥

युक्त एव वाऽलं चापलालङ्कृतलोचनाभिः करणमार्गप्रवी-णाभिस्तरुणीभिः सह तद्गणस्य तव प्रणयपरिचयः। शृङ्गाराङ्गा-रसन्तप्तचेतसो वा कस्य दर्शनिनो नेपथ्यमानन्दमुत्थापयेत् ? भस्मखण्डितः खर इव शाङ्करः त्रिदण्डमण्डितकरः, सल्लकार इवा-द्वैतचारः कूर्चकचा विलोक्यते, न पुमान् आगुल्फपरि-धानतया किं पुरन्ध्रीति सन्देहहास्यरससङ्गतः सौगतः। यदि परं विटनटाकारचेष्टस्य चार्वाकस्यैव वेषस्तेषां पावनतया प्रयुज्यते।

सचिवचूडामणे ! चिन्तय निजागमरहस्यसूक्तिं—

तीर्थानामुत्तमं तीर्थं स्नानानां स्नानमुत्तमम् ॥
शौचानामुत्तमं शौचं ब्रह्मचर्यं सुरक्षितम् ॥१३॥

साचि०–( सविचिकित्सम् ) आः स्मार्तमन्यमनसोऽपालितगृहाश्रमाः प्रागेव यतयः कुमतयः पुत्रहीनाः पितॄणामृणभाजनं, कां शुभां गतिमवाप्नुवन्ति ।

देवसू०–( ईषदुपहस्य )

ध्रुवं धर्माभ्यासः शुभगतिनिदानं किमपरं
न पुत्रस्तद्रूपो नच नियमतस्तस्य जनकः ॥
अपुत्राणां न स्याद्गतिरिति वचः केवलमहो,
द्विजातीनां रामारमणरसिकत्वं कथयति ॥१४॥

कुमुद०–( आत्मगतम् ) अहो प्रतिभणितिपाण्डित्यं श्वेतपटनटस्य ।

देवसू०–( साऽऽच्छुरितकम् ) पुत्रहीनाः पितॄणामृणभाजनं—

एकस्थानचरोऽपि कोऽपि सुहृदा दत्तेन जीवन्नपि
प्रीतिं याति न पिण्डकेन तदिदं प्रत्यक्षमालोक्यते ॥
जातः क्वाप्यपजीवितश्च किल यो विभ्रष्टलक्षां तनुं
मुग्धैः श्वेव स तर्प्यते प्रियजनः पिण्डेन कोऽयं नयः॥१५॥

(गाङ्गिलवर्जं सर्वे हसन्ति)

सचि०–( सकोपान्तः करणम् )…………पतयालवः पातलमूले ।

देवसू०–गोनिन्दां च कर्मणाऽत एव कुर्वन्ति, केवलं वचसैव परिहरन्ति ।

तथाहि ।

एतस्याः कुक्षिकोणे विदधाति वसतिं कोटयः स्वर्गधाम्नां,
एतल्लाङ्गूललग्नाः सपदि तनुभृतो वैतरण्यास्तरन्ति ॥

गामित्थं स्तौति विप्रः पथि पथि, न वयं कारणं तत्र विद्मो ?
गृह्णन्तीमात्मगेहात्तृणमपि निबिडं ताडयन्त्युग्रदण्डैः ॥१६॥

सचि०–(सकोपकडारतारम्) आः एवमुच्चावचवचा अगोचरोऽसि वादकथायाः ।

माणि०–( साहङ्कारम् ) गाङ्गेय सचिव !

जल्पे यं विजिगीषवः सुरपुरीं सम्प्रेषयः प्रैषय-
न्नानेतुं विषमप्रमाणरचनाशास्त्राणि वार्थस्पतिम् ॥
आह्वानं च यदग्रतः कविरिति व्यर्थं वहन् व्रीडया
संश्लिष्टो बलिमन्दिरोदरमगान् मन्त्री महेन्द्रद्विषाम्॥१७॥

स खल्वयोग्यो वादकथायाः ? ।

देवसू०–( समन्युस्तम्भम् ) वत्स माणिक्य ! कोऽस्य तपस्विनो द्विजातेरपराधः, अत्र विवेकबृहस्पतिरपि राजा, भवत्युपालम्भ्यः, कुबोधकश्मलताविष्ये ? हि शिष्ये उपाध्यायस्याप्रसिद्धिः ।

कर्णे कर्णसुधारसं विदधति ध्वाने प्रवेशक्रमं,
किं काकः किमु कोकिलोऽयामीति यः संदेग्धि दग्धाशयः ॥
तं यत्प्रौढविचारचारिमगुणप्रागल्भ्यलीलास्पदे
धत्ते मन्त्रिपदे नृपः सुमनसां तद्भाग्यभङ्गोर्जितम् ॥१८॥

श्रीपालः–भगवन्नाभिधीयते मन्त्रीश्वरं मत्पदः ।

देवसू०–महाभाग ! अभाजनं भयस्य तुल्यतृणमणयः सदृशभिक्षुकक्षितिपतयो यतयः ।

( इत्युत्थाय वसतौ गमनं नाटयति )

साचि०-वयमपि अयोग्योऽयं जल्पकुतूहलस्य शुक्लाम्बर इति निवेदयामो देवस्य ।

( इति निष्क्रान्ताः सर्वे )

## ॥ तृतीयोऽङ्कः ॥

## अथ चतुर्थोऽङ्कः ।

( ततः प्रविशति पारिग्रहिकः श्रीपालः )

श्रीपालः-( ऊर्द्ध्वमवलोक्य ) पर्य्यवसितमहः ।

तथाहि ।

अस्तपर्वतनिपातचूर्णिता-
दम्बरद्रुमशिरश्च्युतादियम् ।
सूर्यमण्डलफलात् समुत्थिता,
सान्ध्यरागमिषतो रसच्छटा ॥ १ ॥

( पुरोमर्कटमवलोक्य )

विद्यते किमु न विद्यतेऽथवा,
मच्छरीरमिति संशयाऽऽकुलः ॥
लोलवालधिमुखेन मर्कटः,
संस्पृशत्ययममन्दमङ्गकम् ॥ २ ॥

तद्व्रजाम्यहमारात्रिकावसराराधनाय राजमन्दिरम्, उपलभे च प्रतीहारं, किमागत्य गाङ्गिलेन विज्ञप्तं, कीदृग् वा श्रीसिद्धराजेन प्रत्यभिदधे ।

( इति गमनं नाटयन् पुरोऽवलोक्य )

नम्रपृष्ठसमुदञ्चितस्तनं,
दीप्रदीपनिकटे कृताऽऽस्पदम् ॥
वक्रवीक्षितजनं सविभ्रमं,
मण्डलं जयति पण्ययोषिताम् ॥ ३ ॥

( एकतोऽवलोक्य )

स्फारदृष्टिरधिकाञ्चनोल्लसद्-
भ्रूलता निविडबद्धकञ्चुका ॥
काऽपि कृत्रिमविलाससम्पदा,
संदधाति जरतो स्मराऽऽतुरान् ॥ ४ ॥

( अग्रगामितर्केण राजमन्दिरप्रवेशं नाटयित्वा पुनः प्रेक्ष्य )

नूनं नाद्यापि सिंहासनमधिरोहति देवः सिद्धराजो, यदिह सुखोपविष्टस्तिष्ठति प्रतीहारः, भवतु पृच्छाम्येनम्,

( इति परिक्रामति )

( ततः प्रविशति यथानिर्दिष्टः प्रतीहारः )

श्रीपा०—(तदन्तिके समुपविश्य) भ्रातः प्रतीहार ! कथय कीदृगमात्यगाङ्गिलेन श्वेताम्बरदिगम्बरविवादविषये विज्ञप्तो देवः ? ।

प्रतीहारः—तदानीमागतः सचिवगाङ्गिलः काष्ठिकयशोराजनिवेदितवृत्तान्तेन पृष्टो देवेन, यल्लिखितः श्वेताम्बरदिगम्बरयोर्विवादसम्बन्धकः ।

श्रीपा०--ततः किमुक्तं सचिवेन ? ।

प्रतीहा०—महत्तमेनाभिहितम्,-देव ! मूर्त्तं ज्वालाजालं कोपानलस्य शुक्लाम्बरः, तदयोग्योऽयं जल्पलीलावनस्येति न रोपितः श्रीकरणे सम्बन्धकः।

श्रीपा०—ततः किमुक्तं देवेन ?।

प्रतीहा०—अन्तरीर्ष्यालुनाऽपि प्रहासपूर्वं प्रतिपादितं देवेन एवम्,-पुरुषापुरुषविशेषविदुषोऽलङ्काराऽऽरोपणमुपपन्नं भवतो व्यपकरणं वा समुचितम् ? । चित्रं ! गौरवर्णोऽपि काले एवावभाससे प्रजानां, सर्वथा सद्बुद्धिदृष्टिना त्वया स दैत्यमन्त्र्यपि तिरस्कृतः।

श्रीपा०—अहो देवस्य वक्रोक्तिवैशारद्यम्, ततः—

प्रतीहा०-गाङ्गिलेन विज्ञप्तम्,-गोस्वामिन् ! महद्विनाशितं मया, यदखिलकलाविलासदर्पणस्य देवस्यापि शासनमस्वस्थेन विकात्थितम्॥

ततो देवेनोदितम्,-मुधा, मयैव विनाशितम्-यन्निर्गुणोऽपि षाड्गुण्यविचारसारे व्यापारे स्थापितोऽसि। दूरमारोपिता हि वयं त्वया विद्वद्गोष्ठीष्वविचारकथाऽचलचूलिकायाम्।

यतः—

अयमवनिपतीनां नीतिपङ्कः कलङ्को-
घटितसदुपसर्गो यद्भवेन्मन्त्रिवर्गः।
शपति न खलु लोकः सायकं प्राणपीडा-
व्यतिकरकृतिकेतुं, हेतुमेवास्य किन्तु ॥ ५ ॥

परमयमेव महान् गुणो यस्तेन दुःसहस्वदर्शननिन्दाश्राविणां

निरुपाधिशुद्धतीव्रतपश्चारिणा सद्यः फलदपापेन शापेन न का-मपि शिलाशकलकलां लम्भितोऽसि ।

तथाहि-

कलयति मरुलीलामापगानां भुजङ्गः,
सुरगिरिरपि धत्ते बालवल्मीकमुद्राम् ॥
भजति कठिनभानुः क्षुद्रखद्योतदीप्तिं,
व्रतनियतमतीनां शापतः सद्यतीनाम् ॥६॥

श्रीपा०—अहो पात्रापात्रपरिज्ञानपावित्र्यं सिद्धचक्रवर्त्तिनः ।

प्रतीहा०—ततोमहत्तमेनावादि, देव ! एवमेतत्, श्रूयते हि विश्वा-
मित्रप्रभृतीनां गिरामगम्यस्तपोमाहिमा ।

व्याहृतं देवेन,-किमुच्यते विश्वामित्रस्य ?—

वाग्वैक्लव्यं कमलवसतेः स्वःपतेरश्रुपूरो,
गीर्वाणानां वदनकमले कालिमा दैन्यदिग्धः ॥
सप्तर्षीणां कृपणभणितौ काऽपि दाक्षिण्यकक्षा,
यस्मिन् सृष्टिं घटयति नवामन्तरायं वितेने ॥७॥

तद् गच्छ त्वं संबोध्य श्रीदेवाचार्यं श्रीकरणे सम्बन्धकं लेखयेति देवेन विसृष्टो निर्जगाम गाङ्गिलः ।

श्रीपा०-स्वयं लज्जमानेन प्रहितोऽनेन देवसूरिसमाकारणाय
लघुभ्राता ।

प्रतीहा०—ततः—

श्रीपा०—तेन च महतीं वैनयिकीवृत्तिमातन्वानेन प्रकृतिकरु-
णाभरमन्थरः प्रसत्तिमानीतः स भगवान्, ततो
विजयसेननामा स्वशिष्यः प्रहितः ।

प्रतीहा०-युक्तमनुष्ठितं भगवता यद्वाङ्किले स्वयमनागते नाऽऽगतमात्मना ।

श्रीपा०-ततः करणे समागतः स विजयसेनः, पृष्टो महत्तमेन, सादृश्यमनुमापयति यौनसम्बन्धम्, तत्किं भवाति देवाचार्यस्तवेति ?।

प्रतीहा०-ततः किमुक्तममुना ?।

श्रीपा०-अमात्य ! अनर्हो विवाहव्यवहारस्य व्रतिजनः किमनेन विचारेण, लेख्यतां प्रकृतः सम्बन्धकः ।

प्रतीहा०-(सानन्दम्) नूनं निरीहावतंसस्य श्रीदेवसूरेः शिष्यस्य यदुचितं तदवाचि विजयसेनेन ।

श्रीपा०-ततो मया संबन्धकं व्यालिख्य विसर्जितौ।

प्रतीहा०-(सखेदम्) लञ्चावितरणचातुर्येण दिगम्बरेण सपक्षीकृताः सन्ति शीलाङ्कयशोधरादयः ।

श्रीपा०-कथमवसीयते ?।

प्रतीहा०-विज्ञप्तः खलु ह्यस्तनेऽह्नि देवो यशोधरेण, यद्देव ! दृष्टोऽद्य दिगम्बरशिरोऽलङ्कारः कुमुदचन्द्रः ।

अहो अस्यान्वीक्षिकी वैचक्षण्यं, अहो पवित्रमवाक्त्रित्वम्।

नूनम्—

वदति कुमुदचन्द्रे मुद्रिता वादवार्ता,
प्रतिवचनविचारे भाष्यकर्ता स यस्य ॥
भुजगपरिवृढोऽपि प्रौढिमानं न धत्ते
यदविशदयमन्तर्लज्जया भूमिगर्भम् ॥ ८ ॥

श्रीपा०—ततः किमुक्तं देवेन ?

प्रतीहा०—अस्ति महातार्किकोऽयं तद्भविष्यत्यस्मन्मनःकौतुकाय, अहो! अस्य देवाचार्य्येण सह जल्पप्रबन्ध इति।

(नेपथ्ये)

वैतालिकः--प्रमोदसंपदे संपद्यतां देवस्य चन्द्रोदयः-

राजन्नभ्रंलिहगृहलसच्चन्द्रशालाग्रवल्ग-
ल्लोलाक्षीणां वदनरुचिभिर्निह्नुतस्यामृतांशोः॥
एते ह्यभ्युद्गमविलसितं वायवो व्यञ्जयन्ति,
क्रीडावापीविकचकुमुदाऽऽमोदसौहृद्यसाराः॥ ९॥

मनस्विनीधाम्नि मृगाङ्कभासः,
प्रदह्यमानाऽगुरुधूमधूम्राः॥
विकासते क्षालितमानपङ्क-
श्लेषेण कालुष्यमिवोपयाताः॥ १०॥

मागधी-चउलुक्कतिलय तुह किति केलिवावीइ मण्डणं ससिणो।
गब्भ ट्ठिआलिपटलं पडिहासइ पुंडरीअं व[१] ॥११॥

अपि च।

संपइ नरिंद तुह रिउ घरे सुचन्द मुनिचन्द सालाओ॥
निअ नाह विओएण व रुअंति नीसन्द सलिलेहिं[२]॥१३॥

---

१ चौलुक्यतिलक! तव कृतिकेलिवाप्या मण्डनं शशिनः।
गर्भस्थितालिपटलं परिहासयति पुण्डरीकमिव॥ १॥

२ संप्रति नरेन्द्र! तव रिपुगृहे सुचन्द्रमुनिचन्द्रशालाः।
निजनाथवियोगेनेव रुदन्ति निस्यन्दसलिलैः॥ २॥

प्रती०-प्रस्तावो देवस्याऽऽरात्रिकावसरस्य कविः समाहूयते, तदहं गमिष्यामि ।

श्रीपा०-अहमपि देवं प्रणम्य गाङ्गिलयशोधरोदन्तं श्रीदेवसूरेर्ज्ञापयितुं व्रजामि ।

( इति निष्क्रान्तौ )

॥ विष्कम्भकः ॥

( ततः प्रविशति कविराजः )

कविराजः-( स्मरणं नाटयित्वा ) समादिष्टोऽस्मि देवेन सिद्धचक्रवर्त्तिना, यथा त्वया रजन्यां देवाचार्य्यवसतौ गत्वा ( आत्मगतम् ) एवं वाच्यमिति तद् व्रजाम्यहं ( शय्यापालकमारुह्य ) कृतप्रतिक्रमणकृत्याः सम्प्रति भविष्यन्ति मुनीश्वरा इति ( तथा कृत्वा वसतिद्वारे शय्यापालकादवरोहं नाटयन् श्रवणमभिनीय सहर्षम् )

पापाऽऽटोपकपीटयोनिशमनश्रीपुष्करावर्तक-
श्चारित्रावनिपालमन्दिरलसत्सङ्गीतलीलोत्सवः ॥
संसारोद्धुरसर्पदुष्टतनुभृन्मन्त्राभिधानक्रमः,
स्वाध्यायध्वनिरेष मे श्रवणयोः पीयूषमावर्षति ॥१३॥

( सविमर्शपुलकम् )

मानं मा वितनुष्व धर्मदयितेऽमुष्मिन्दुराराधने,
वैमुख्यं कलयेदयं यदि सुखोदन्तोऽपि तद्दुर्लभः ॥
इत्थं मुग्धसखीमिव त्रिजगतीं संशिक्षयन्ती मुहुः,
सूक्तिर्व्यक्तिमगादियं भगवतो वीरस्य वक्त्राम्बुजात् ॥१४॥

धन्यानां वदनाम्भोजे स्फुरत्येषा, यदग्रतः ॥
ज्वालायते रसाला सा शर्करा कर्करायते ॥ १८ ॥

( इति प्रवेशं नाटयति )

(ततः प्रविशति पारिग्रहिकः श्रीपालनिवेद्यमानवृत्तान्तः शिष्यमाणिक्यविजयसेनाभ्यामलङ्कृतपार्श्वः श्रीदेवसूरिः)

देवसूरिः—(पुरोविलोक्य) अये कथं सिद्धभूपालबालमित्रं, सूत्रं सुकवितायाः, कविराजबिरुदकमलनालं, श्रीपालमालोकयामः।

कविः—(सप्रणयं प्रणम्य उपविश्य सविषादं)

पातुं नेत्राञ्जलिभिस्त्वद्रूपरसायनं विधिहतस्य ॥
श्रीदेवसूरिसुगुरो ! नाभङ्गुरमस्ति मे भाग्यम् ॥ १९ ॥

देवसू०—कवीश्वर ! अप्रतिकार्योऽयं पुराकृतासुकृतपरिपाकः, परं कृतैव भगवत्या भारत्या त्वयि त्रिलोकाऽऽकलनकौशलजुषः सारस्वतचक्षुषो वितरणेन करुणा।

कविः—भगवन् ! समादिष्टोऽहमिहाऽऽगमनाय देवेन चौलुक्यचन्द्रमसा संदिष्टश्च ।

देवसू०—अवहिताः स्मः।

कविः—इदमाह महीमीनलाञ्छनः, प्राप्तप्रतिवादिविजयलक्ष्मी विपक्षस्ते स्वदेशोत्कर्षहर्षिणां चास्माकं परदेशीयेन विजयोपार्जनं महते परितापाय, नच परदेशजेनापि गुणेन गृह्यामहे वयम्, निर्गुणेऽपि स्वदेशजे पक्षपातो हि निर्घातो राजनीतेः कुसुमस्तबकोऽपकीर्तिकण्टा-

लिकायाः, तत्तथा प्रयतेथा यथा न दौर्मनस्येन दूयामहे, किन्तु स्पर्धामहे, सुधर्मायैव वर्द्धामहे प्रमोदपीयूषपूरेणेति ।

देवसू०—(सरोमाञ्चकवचम्) कःखल्वदाक्षिणश्चाविचक्षणश्चैवमाचक्षीत, एवं तु संबोधनीयो महीमहेन्द्रो—यथा भवदभीष्टघटनाय भवत्प्रताप एव पटीयान्, मा कृथाः सर्वथाऽपि संदेहदोलान्दोलनक्रान्तं स्वान्तम् ।

कविः—किमुच्यते चौलुक्यचन्द्रस्य ? ।

वारं वारं प्रतिनृपशतोल्लुण्ठकण्ठाटवीषु,
प्रीतां दुग्ध्वा भुजबललसद्वत्सकां खङ्गधेनुम् ॥
यस्य ज्योत्स्नाजलशुचियशःक्षीरपूरैः प्रतापो,
गोपः पूर्णामतनुत जवाद् विश्वपारीमपाराम् ॥१६॥

देवसू०—कश्चायं स्वसभया पराजितायां सुधर्मायां सुधास्पर्धाऽनुबन्धो धराऽधीश्वरस्य, किं नालोक्यन्तेऽनेकचतुराननाः, किं न परिस्फुरन्ति गणनातिक्रान्ता गिरीशाः, किं न लक्षीक्रियन्ते लक्षशः पुण्डरीकाक्षाः, किं न जृम्भन्ते भूरिशो जिष्णवः, किं नोल्लसन्ति बहवो राजहंसाः, किं न विलसन्ति सहस्रशो भूतनयबुधाः, किं न प्रगल्भायन्ते मध्येसुधर्माधिकृतमन्त्रिणः ।

कविः—भगवन् ! ईदृगेव गुर्जरेश्वरस्य सभा ।

तथा हि—

तावद् व्याकरणप्रवीणभणितिः प्रागल्भ्यमुज्जृम्भते,
तावत्काव्यविचारभारधरणे धीरायते धुर्यता ॥

तावत्तर्ककथाऽनुबन्धविषये बद्धाभिलाषं मनो,
यावन्नो जयसिंहदेवसदसि प्रेक्षावतामागमः ॥१८॥

देवसू०-सा किं कलाप्यस्ति ? या न प्रेमाऽऽकुला चौलुक्यचन्द्रमसि ।

कविः-भगवन् ! एवमेवैतत् ;

तथा हि—

ऊढा प्रौढिर्न मन्त्रोद्धरणपरिणतैः कर्षितो न प्रकर्ष-
स्तन्त्रोत्तानैरसेन्द्राऽभ्युदयविधिबुधैर्धारितं नोङ्कुरत्वम् ॥
स्मार्तैः स्फूर्तिर्वितेने न, न पटिमगुणः स्फोटितो वेदविद्भिः,
चर्चा चाणक्यवाचां व्यरचि न सचिवैर्यत्र सिंहासनस्थे॥१९

देव०—कविकुञ्जर ! विदुषामखण्डपुण्यखेलितमिदं, यदयमेवंविधः क्षितिपतिः सभापतिः ।

कविः—भगवन् ! महती रात्रिरतिक्रान्ता तद्वन्दिष्येऽहं, प्रभवोऽपि योगनिद्रासुखमनुभवन्तु ।

( इति निष्क्रान्ताः सर्वे )

## चतुर्थोऽङ्कः ॥

---

## अथ पञ्चमोऽङ्कः ।

---

( ततः प्रविशति राजमन्दिरद्वारमागतः प्रतीहारः )

प्रतीहारः-( पुरोऽवलोक्य ) कथमयं ठक्कुरः श्रीपाल इतएवाऽऽगच्छन्नास्ते ।

( प्रविश्य )

श्रीपालः—(तं प्रति) किं समयोऽस्ति देवदर्शनस्य ? ।

प्रतीहा०--प्रतीक्षस्व क्षणं, देवोऽन्तःपुरमध्यास्ते ।

श्रीपा०-( उपविशति )

प्रतीहा०—विज्ञप्तः कल्ये देवो दण्डनाथशीलाङ्केन यथा यदि श्वेताम्बरः पराजीयेत तदा देवेन मम समर्पणीयः ।

श्रीपा०—ततः किमुक्तं देवेन ? ।

प्रतीहा०—यद्येवं भविष्यति तदैतदपि करिष्यामि इति ।

श्रीपा०—(साऽऽशङ्कम्) कथं प्रतिपन्नोऽयमर्थो देवेन !! ।

प्रतीहा०—यदि कथमपि दैवात्पराजयः श्रीदेवसूरेः, तदा महती विडम्बना, विद्वरे पतिष्यति श्वेताम्बरशासनम् ।

श्रीपा०—महात्मन् ! असंभावनीयमेतत्—

आदौ शासनदेवता दलयति प्रत्यूहदन्तावलं,
साधूनां विशदं तृणीयति ततस्तेजस्तपःसंभवम् ॥
श्राद्धानां सुकृतानि केसरिनखायन्ते च तं प्रत्यहो,
तच्छ्वेताम्बरशासनं विजयते विघ्नाऽऽवलीनाशनम् ॥१॥

सखे ! कियन्मात्रमेतत् दिगम्बरवाणीतरङ्गिणीशोषणं प्रतिभोष्मणां श्रीदेवसूरीणाम्—

शब्दाशब्दविवेकविद्रुमवनाविर्भावसंभूषितः,
तर्कौर्वाग्निशिखाकरालकुहरः सिद्धान्तरत्नाञ्चितः ॥
साहित्यामृतसारणीतिलकितक्रोडस्थलो लीलया,
बिभ्राणैर्मुनिनामपीयत ? जवाद्यैर्वाङ्मयाम्भोनिधिः ॥२॥

प्रतीहा०—अद्य तृतीयप्रहरे इममप्युत्सवं द्रक्ष्यामः।

श्रीपा०—(पुरोविलोक्य) अयं देवोऽन्तःपुराद्गजराजनिरीक्षणाय व्रजन्नास्ते तदहं प्रणम्य गच्छामि।

(इति निष्क्रान्तावुभौ)

॥ विष्कम्भकः ॥

—o—

(ततः प्रविशति राजकाष्ठिकेनाहूयमानः सुखासनासीनः पुरःप्रोद्दामवादित्रकेशवादिपरिच्छदालङ्कृतो बन्दिवृन्दपठ्यमानः कुमुदचन्द्रः)

बन्दी—विजयेतामद्य श्वेताम्बरशासनदेवाचार्यौ दिगम्बरशासनकुमुदचन्द्रौ।

केशवः-सखे! कथमनिश्चितकर्तृकर्मप्रयोगमुभयत्र द्विवचनम्।

कुमुदचन्द्रः-(सहर्षम्) पूर्णा अद्य मनोरथाः—

मद्वाचस्तरलायन्ते प्रपातुं विजयामृतम्॥
युक्तं कुमुदचन्द्रस्योदये पानं मृगीदृशाम्॥ ३॥

बन्दी—गउड नवाडि गडवडिय चोड कन्नाड विहंडीय
दिउड दडीय अपुरि खुडीअ लाड डाहालीअ मुंडिअ।
मरहट्ठ यउत्तट्ठ नट्ठ सोरट्ठ समुट्ठिअ
निरुमालविअ पभट्ठ घट्ठ कन्नउजइ पइट्ठिअ॥

सिरि कुमुदचंद वहिअ निअ विसलहसहालीरु समुल्लवई ।
तिम गव्वु गलअउ पंडिअ जणह जिम सूरुग्गमि हिमु दवई॥४॥

कुमुद०—(पुरोनिरीक्ष्य) अये प्राप्ता वयं पार्थिवधवलगृहद्वारे ।

(इति सुखासनादवरुह्य वादशालाप्रवेशं नाटयन्)

कथं नायात्यद्यापि श्वेतपटः,

(इति प्रतीहारोपनीतपट्टके उपविशति)

(ततः प्रविशति साधुथाहडदत्तबाहुः पुलकपल्लविताङ्गवाह्निः कतिपयाऽऽसश्राद्धमण्डलीमण्डितो देवसूरिः)

थाहडः—भगवन्! उत्कण्ठते मत्करः काष्ठाम्बरलञ्चावशीकृतान् सभासदस्त्यागलीलायितेन संमुखयितुम् ।

देवसूरिः—साधो! अलमस्थानक्लेशेन, यत्कर्णे अनुगृहीतोऽस्मि सुगृहीतनामधेयैः शिष्यलववत्सलैः श्रीमुनिचन्द्रसूरिभिरद्भुतमयोगप्रदानेन ।

थाह०—(सचमत्कारमभिनयन्) तर्हि फलितमस्मत्पुण्यमञ्जरीभिः।

(नेपथ्ये कलकलः)

थाह०—अयं महाराजः सभायां निविशते ।

(ततः प्रविशति राजा श्रीजयसिंहदेवः शीलाङ्कयशोधरराजगुरुगाङ्गिलप्रभृतिभिर्विभवतश्च परिच्छदः)

(सर्वे यथोचितमुपविशन्ति)

देवसू०—(राजानं प्रति)

नारीणां विदधाति निर्वृतिपदं श्वेताम्बरप्रोन्मिष-
त्कीर्तिस्फातिमनोहरं नयपथप्रस्तारभङ्गीगृहम् ॥
यस्मिन् केवलिनो न निर्जितपरोत्सेकाः सदा दन्तिनो,
राज्यं तज्जिनशासनं च भवतश्चौलुक्य ! जीयाच्चिरम् ॥२॥

राजा-(सहर्षम्) औचित्यवर्णना हि प्रथमे प्राणाः कविता सहृदयतायाः ।

कुमुद०-( नृपं प्रति )

खद्योतद्युतिमातनोति सविता जीर्णोर्णनाभालय-
च्छायामाश्रयते शशी मशकतामायान्ति यत्राद्रयः ॥
इत्थं वर्णयतो नभस्तव यशो जातं स्मृतेर्गोचरं,
तद्यस्मिन् भ्रमरायते नरपते ! वाचस्ततो मुद्रिताः ॥३॥

राजा-(आत्मगतम्) आः वाचोमुद्रिता इति वदता दिग्वाससा सूचितः स्वस्य पराजयः । (प्रकाशम्) कः कोऽत्र भोः सभ्यः ? ।

प्रती०-(अङ्गुल्या निर्दिशन्) देव ! अयं तर्कभारतपाराशर-महर्षिर्महर्षिः, शारदादेशविदितावदातविद्यामहोत्साहो-ऽयमुत्साहः, अयमद्भुतमतिश्रीसागरः सागरः, अय-मुत्तीर्णप्रमाणपथमहार्णवाभिरामो रामः, एते देवस्य सभ्याः, अयं च देवाचार्यपाक्षिककविकैरवराजः कवि-राजः, अयमद्भुतप्रतिभाभूर्भाभूः ।

कुमुद०-इयमस्मत्पाक्षिकी केशवत्त्रयी ।

उत्साहः-(ईषदुपहस्य)

संवृतावयवन्नमस्तद्दूषणं साधनं सदासि दर्शयिष्यतः ।

अस्य लुञ्चितकचस्य केवलं केशवत्त्रितयमेति सभ्यताम्॥७॥

राजा-(सस्मितम्) पक्षे केशवतां त्रयम्।

उत्सा०-कः पृथ्वीपुरन्दरादपरः पाठमात्रादप्येवं रहस्यग्राही?।

राजा-कोऽत्र वादी ?।

महर्षिः-दिगम्बरः।

राजा-(सस्मितं कुमुदचन्द्रं प्रति) क्रियतां प्रयोगः।

कुमुद०--प्रयोगमुद्गृणाति।

देवसू०-(तं दूषयित्वा) वादिना हि द्वयं कार्यं, परपक्षविक्षेपः, स्वपक्षसिद्धिश्चेति, (स्त्रीनिर्वाणसिद्धये प्रयोगमारचयति)

कुमुद०-पुनरुच्यताम्।

देवसू०-(प्रयोगं पुनः पठति)

कुमुद०-(सखेदकालुष्यम्) भूयोऽप्यभिधीयताम्।

देवसू०-(पुनः प्रकाशयति)

कुमुद०-(सम्यगर्थमनवबुद्ध्य दूषयति)

देवसू०--अस्य भवद्भाषितस्य अनवबोध एवोत्तरम्।

महर्षिः--(सहर्षं सशिरःकम्पम्) अहो देवसूरेर्वादन्यायवेदित्वं, यदि दूषणाऽऽभासमयमनूद्य दूषयेत्तदा अयमपि निगृह्येत।

कुमुद०--लिख्यतां कठिन्ने प्रयोगः।

देवसू०--सोऽयं गुरुशिष्यन्यायः।

महर्षिः--देव! समाप्ता वादकथा, जितं श्वेताम्बरेण, हारितं

दिगम्बरेण, अतोऽप्यूर्द्ध्वं विकथनं पराभूतजृम्भारिसभे महाराजसदसि गोवधमनुबध्नाति ।

शीलाङ्कः--सर्वदैव भङ्गपातकारिणामग्रेसरोऽयं महर्षिः न ददात्येवमुदयं वादकथायाः ।

राजा--( तं प्रति जनान्तिकम् ) व्रज त्वमात्मप्रयोजनाय, भग्ना खलु भवन्मनोवल्लरी श्वेतपटपुण्यप्रभञ्जनेन ।

शीला०--(सविषादमपक्रामति) .

राजा-महर्षे ! ज्ञातमस्त्यस्माभिस्तत्वं, परं वर्द्धतां कौतुकं, लख्यतां कडित्रे प्रयोगः ।

केशवः--(लेखनं करोति)

कुमुद०--(अवबुद्धय दूषयति )

देवसू०--(अनूद्य तद्दूषणं च परिहृत्य स्वपक्षं स्थापयन् कोटाकोटि शब्दं प्रयुङ्क्ते)

कुमुद०—आः ! अपशब्दोऽयम् ।

उत्साहः--अन्तरिक्षाम्बर ! मैवमाचक्षीथाः,

कोटाकोटिः, कोटिकोटिः, कोटीकोटिरिति त्रयः ॥
शब्दाः साधुतया हन्त संमताः पाणिनेरमी ॥ ८ ॥

( इति पाणिनिप्रणीतसूत्रं व्याकरोति )

देवसू०-आः स्वशास्त्रस्यापि न स्मरसि "अन्तः कोटाकोटिस्थितिके सति कर्मणि" इति ।

राजा--(सचमत्कारम्) अहो निर्भरेऽप्येवं वाक्संपराये एवं ज्ञापकस्मरणं विशेषलक्षणभाषणं च देवाचार्यमुखादेव विजृम्भते ।

कुमुद०--( सवैलक्ष्यं वाक्स्तम्भं च, किमपि किमपि अनूद्य दूषयति )

देवसू०--दशमांशेनापि नानुवादो दूरे दूषणोद्घोषणम् ।

यशोधरः--आर्ध्यां वृत्त्या सर्वमनूदितम् ।

देवसू०--(उपहस्य) कोऽयं मर्कटमुखः, पीयूषमधुररसालफललोभलोललोचनस्तप्तायोगोलके तुण्डं ताण्डवयति । अव्यापारे व्यापारः कीलकोत्पाटन इव कस्य न हास्यावहः ।

राजा०--( सहासं ) साधूपश्लोकितोऽन्तरालप्रलापी ।

देवसू०--(दिगम्बरोक्तमावर्त्त्य दूषयति)

कुमुद०--(सकण्ठशोषं मषीकूर्चकितभालम् ) महाराज ! महानवादी देवाचार्य्यः ।

राजा--कुमुदचन्द्र ! मा तन्द्रामङ्गीकृथा, अयमहमग्रस्थितः कथयिष्यामि, कुरु वचनविरचनाम् ।

कुमुद०--( सदैन्यगद्गदम् ) देव ! अलं निर्बन्धेन ।

कविः--( सोल्लासं ) किमुच्यते विशदाम्बरदर्शनोदयाद्रिदिवाकरस्य देवसूरेः—

वल्गद्युक्तितडिल्लतां दशनरुक्चञ्चद्बलाकान्वितां,
यद्वाचं जलदावलीं सदवधु व्यालोक्य विस्तारिणीम् ॥
श्रीसिद्धाधिपतेः पुरः स्थितिजुषो नेतुर्नभोवाससां,
दर्पोष्मा व्यगलत्प्रभाऽञ्जमदलद्वाग्जालहंसोऽचलत् ॥९॥

उत्साहः--( कुमुदचन्द्रं प्रति )

एतेनास्मि पराजितः परिषदि श्रीसिद्धभूमीभुजो-
धृत्वैवं हृदये दिगम्बरमणे ! मा मा स्म लज्जां कृथाः ॥
जल्पाजल्पविलासवर्णनविधौ श्रीदेवसूरेस्त्रपाम्,
क्रान्ता सापि विधृत्य मौनमभजद् वैमञ्चिकी भारती ॥१०॥

राजा--( सरोमाञ्चम् )

जल्पतां देवसूरीणां मन्ये संमर्दमभ्रया ॥
क्षिप्तौ निरुञ्छनीकृत्य[1] भारत्या गुरुभार्गवौ ॥११॥

महर्षिः--देव ! अद्य श्रीदेवसूरेः प्रामाणिकमनोहारिणीं वाणीमाकर्ण्य विशीर्णः कणादाक्षपादभणितौ पक्षपातः, उद्विग्नमुद्योतकरोक्तावन्तःकरणं, अरुचिगोचरतामचरद्वाचस्पतिमतिः, दग्धमिवावभात्युदयनवाग्वैदग्ध्यम् ॥

राजा--प्रमोदामृतमग्नमभून्मदीयमङ्गं केवलं समाप्तापदलोष्ठे श्रीदेवसूरौ त्यागलीलासुखमनासादयन् खिद्यते मद्बाहुः ।

देवसू०--चौलुक्यावचूल ! अलं विषादकुतूहलेन, वितीर्णैव त्वद्दोष्णा परज्योतीरसेन्द्रबन्धनौषधेस्तपोधनजनस्यापि तपोनिर्विघ्नतासिद्धिः, राजन्वत्यां हि वसुमत्यां कण्टकाऽऽकुलतया कीदृशी चरणचारिता ।

राजा--( कुमुदचन्द्रमुखमालोक्य सकौतुकम् ) केन खलु मषीकूर्चकविरचना व्यरच्यत वदने वियद्वसनस्याद्भुता ।

( प्रविश्य नेपथ्ये वज्रार्गलानाम योगिनी )

योगिनी--( हस्तमुदञ्च्य ) अक्षयस्कन्धो भवतु सिद्धधराधीश्वरः।

( तामालोक्य सर्वे विस्मयन्ते )

---

१ निरुञ्छि निष्कृत्येत्यपि पाठः ।

राजा--(साश्चर्य्यम्)

शीतांशोः कुलदेवतालनुलता कामस्य नव्यं वयो-
लावण्यं भृशतप्तकाञ्चनरुचः संवादिनीं दीधितिम् ।
दृष्टिं शान्तरसप्रवाहविलसच्छ्वेताब्जिनीं बिभ्रती,
काऽज्ञातैव सभाप्रवेशमकरोत्कस्मादकस्मादियम् ॥१२॥

वज्रार्गला--क्षोणीपते ! त्वामभिनन्दाति प्रणतपार्थिवविलीयिता-
मङ्गलिलक्षा द्वेवी कामाक्षा ।

यथा

राजन्वतीं वसुमतीं विस्मारितरघूद्वहाम् ।
विक्रमाञ्चितया नीत्या रक्षन् पुष्यस्व वाञ्छितैः ॥ १३ ॥

राजा--(सहर्षोत्कर्ष) धन्यः खल्वहं, पुत्रमिव मन्यते मां कामरूप-
पीठाधिपतिर्भगवती ।

वज्रा०--समादिष्टाऽस्मि स्वामिन्या यथा ऽस्मज्जातेरपवर्गमार्ग-
भङ्गभुजङ्गव्याहारलग्नस्य नग्नस्य मुखे मषीकूर्चकं विर-
चयेति, कृतश्च मया तदाऽऽदेशस्तदनुजानातु मां गमनाय
महीमृगाङ्कः ॥

राजा--अमोघं भवतीनां दर्शनम् ।

वज्रा०--ददामि यदभिप्रैषि ।

राजा--वेतालो विकरालमूर्त्तिरकृत श्रीबर्बरः किंकरः,
पक्षच्छेददशां विपक्षनृपवन्नीतः परां पारदः ॥
कामाक्षा च निरीक्षते भगवती मां प्रौढपुत्राऽऽशया,
किं नामास्त्यमुतोऽपि मेऽभिलषितं यत्प्रार्थये संप्रति॥ १४॥

तथापीदमस्तु।

प्रतिवादिपराभूतिधूमरीध्यामलानना।
कदाप्यसमत्सभा माभूत्सारदावाल्लिमञ्जरी ॥ १९ ॥

वज्रा०--इलातलाऽऽखण्डल! दुर्लङ्घ्यैव वादिभिस्ते सभा, यत्र देवाचार्यमूर्त्तिर्वादार्गला, भविष्यति च सदैवेदम्।

(इति गगनगमनेन निष्क्रान्ता वज्रार्गला)

राजा--(कुमुदचन्द्रं प्रति) प्रशान्तदर्पोष्मणस्ते पर्याप्तमितःप्रभृत्यातपत्रेण, दीर्घनिःश्वासविक्षिप्तमक्षिकस्य कृतं चामरैः, तूलादपि लघोरलं सुखासनाध्यासनेन।

(नेपथ्ये)

साधुथाहडनागदेवयशोनागप्रभृतयः श्राद्धाः भो भो गीयन्तां मङ्गलानि, प्रवर्त्यतां वर्द्धापनकानि, समारोपितः खलु श्वेताम्बरप्रासादे श्रीमद्देवसूरिणा विजयकल्याणकलशः।

राजा--(देवसूरिं प्रति) प्रतिवादिमदज्वरापनोदधन्वन्तरे! श्रीदेवसूरे। अलंकुरुष्व वसतिं, कृतमङ्गलाचारः प्रतीक्षते श्राद्धवर्गो भवदागमम् (प्रतीहारं च प्रति) समादिश्यतां महोत्सवाय पौरलोको, वयं योगीन्द्रकलामनुशीलयामः॥

(इति निष्क्रान्ताः सर्वे)

## ॥ पञ्चमोऽङ्कः ॥

इति मुद्रितकुमुदचन्द्रनाम नाटकम्।

कृतिरियं श्रीपद्मचन्द्रसूनोर्यशश्चन्द्रस्य ॥



## मुद्रितकुमुदचन्द्रनाटकस्थपद्यानां अकारादिक्रमेण सूचीपत्रम् ।

॥ श्रीः ॥

# मुद्रितकुमुदचन्द्रप्रकरणस्य मुद्रणाधारभूतानि पुस्तकानि ।

१ एकं पुण्यपत्तनस्थ (पूना) संस्कृतलाइब्रेरीतः समागतमशुद्धं कसंज्ञकम् ।

२ द्वितीयं मुनिराजभक्तिविजयजीतःप्राप्तं सं. १९५८ वत्सरे राजनगरलिखितं नातिशुद्धं खसंज्ञकम् ।

३ तृतीयं मुनिराजमहाराजश्रीहंसविजयस्य सं. १९४४ वत्सरे लिखितं प्रायः शुद्धं गसंज्ञकम् ।

| पृष्ठे | पङ्क्तौ | | |
|---|---|---|---|
| १ | ६ | ग. | पुस्तके लाञ्छित ध्रुव इति लिखितमस्ति। |
| २ | ३ | ग. | रसनिस्यन्द इति पाठो वर्त्तते स एव शुद्धतामावहति । |
| ३ | ४-५ | ग. | प्रबन्धानां सोऽत्र इति पाठः, अतन्द्रः काव्यमुद्रासु इति चाग्रपाठः । |
| ४ | ८ | ग. | परीणईए इति दृश्यते । |
| ५ | ३ | ग. | श्लाघ्यैव इति अनुस्वाररहितः पाठो युक्ततरः । |
| ,, | १७ | ग. | १४ श्लोकानन्तरं अपिचेत्याधिकः पाठः क. ख. संज्ञके नास्ति । |
| ६ | ३ | | १६ श्लोकस्थाने १५ इत्यशुद्धिः । |
| ७ | २ | ग. | मुद्रादर्शनमात्रपावनतया इति युक्तः पाठः। |

| पृष्ठे | पङ्क्तौ | |
|---|---|---|
| ,, | २-३ | ग. सोमभूरिति पाठः। जटाचूर्ण इति दृश्यते। |
| ,, | ११ | ग. पक्षपातेन नाचक्षे इति पाठः। |
| ८ | ७ | ग. विदुषां मुख इति युक्ततरः पाठोऽवगम्यते। |
| ,, | १२ | ग. जर्जरीकृतगूर्जर इति लेखः। |
| ९ | ६ | ग. (माणिक्यो वक्तुमुपक्रमते) इति युक्त एव। |
| ,, | ८ | ग. वर्त्तमानस्य ते इति अधिकः पाठः। |
| १० | ११ | ग. कुलोद्यत् स्वनामिति पाठान्तरम्। |
| ११ | २ | ग. प्राप्ताग्रवादामिति पाठान्तरं यशोविशेषणम्। |
| १२ | ३ | ग. सर्वथा शम एवेति अधिकः पाठः। |
| ,, | ७ | ग. हसति इति शुद्धमस्ति। |
| ,, | ७ | ग. पङ्कजे इति सप्तम्यन्तः। |
| ,, | १६ | ग. उल्लुण्ठोक्तीनामित्येव युक्तः। |
| १३ | ४ | ग. क्षोणिरुहां गणेनेति शुद्धः। |
| ,, | १३ | ग. कथय इति पाठो नास्ति। |
| १५ | १५ | ग. क्षीराम्भोनिधिगर्भे इति शुद्धः पाठः। |
| ,, | १९ | ग. प्राप्स्यति खलु स खलो-इति अधिकः पाठः। |
| ,, | २२ | ग. लोहिस्सादि भयवंपि ईदृक् पाठः। |
| १६ | १ | ग. तुह्माणं ... पुच्छयपत्थारो इत्यक्षरहीनः पाठः। |
| ,, | ८ | ग. यथा-वत्स! प्रेष्यतामिति युक्तः। |
| १७ | १-२ | ग. देवाचार्य! प्रभो! वनसरोजाक्ष्याः इति पाठान्तरम्। |
| १७ | १५ | ग. कार्यसिद्धेरित्येव पाठः, सदिति पदं नास्ति। |
| १८ | ५ | ग. सखे इति सम्यक् पाठः। |
| १९ | १ | ग. निर्व्यूढानेकवादिविजय इति रीत्या पाठः। |
| ,, | १० | ग. भाणितमित्याकर्णयाम इति विशेषः। |
| २० | २ | ग. वृद्धार्यिकानटनदीपनविधिरिति समस्तः पाठः। |

| पृष्ठे | पङ्क्तौ | |
|---|---|---|
| ,, | १९ | ग. मूर्च्छा ज्वरोऽहमिति पाठान्तरम् । |
| २२ | ३ | ग. प्रतिवादिजलपज्वालानाम् इति पाठान्तरम् । |
| ,, | १४ | ग. प्रगुणीक्रियतामिति च पाठः । |
| ,, | २० | ग. क्षुत शब्द इति । |
| २३ | १ | ग. वास्तवः सम्बन्ध इति पाठान्तरम् । |
| ,, | ८ | ग. तदानय त्वमेव सुखासनमिति पाठान्तरम् । |
| २४ | १६ | ग. वैशारद्यडम्बरादिगम्बरांद्यदि इति पाठः । |
| २५ | १ | ग. तपःप्रभापराभूतस्फुरत्तपनतेजसि इति साधुपाठः। |
| ,, | २२ | ग. श्यामिकामषीमिति पाठः। |
| २६ | ७ | ग. ठकारावलिः इति शुद्धः पाठः । |
| ,, | ८ | ग. गूर्जर इति लेखः । |
| २७ | ९ | ग. प्रविशति श्रीकरणगत इति युक्तः पाठः । |
| २९ | १४ | ग. हरते गणो मृगोति पाठः । |
| ,, | १९ | ग. कूर्चकचावलोकनेन पुमानिति शुद्धः पाठः । |
| ३० | १९ | ग. विधिरिति पाठान्तरम् । |
| ,, | १७ | खसंज्ञके पुस्तके त्रुटिरस्ति मुद्रणसमये गसंज्ञकं पुस्तकं न समासादितं–अधुनाऽत्र तल्लिख्यते । |

"सचि०–(सकोपान्तः कलुषम्) श्वेतभिक्षो ! न युक्तं वर्णगुरूनेवमवज्ञातुं, ब्राह्मणगोनिन्दावादिनां न रौरवादपरत्र स्थितिः।

देव०–यदि वर्णगुरवो नासंस्तत् कथं पतयालवः पातालमूले, गोनिन्दां च कर्मणाऽतएव कुर्वन्ति " इति ॥

| | | |
|---|---|---|
| ३४ | १४ | ग. मुग्ध इति पाठान्तरम् । |
| ३६ | ११ | ग. विसर्जितोऽसौ इति पाठान्तरम् । |
| ,, | १२ | ग. सखे ! इति सम्बोधनान्तं (सखेदमिति) स्थाने । |
| ३७ | १२ | ग. चकासति इति शुद्धः पाठः । |

पृष्ठे पङ्क्तौ

,, १४ ग. कित्ति, ... मण्डल, इति उभयत्र पाठद्वयं युक्तम्।

,, १५ ग. पडलमिति पाठः।

,, १७ ग. संपइ नरिन्द तुह रिउ घरेसु चन्दमनि इति रीत्या पाठो दृश्यते स एव युक्तः।

३८ १२ ग. भविष्यन्ति ते मुनीश्वरा इति पाठः।

३९ २ ग. रसालाऽपि इति पाठान्तरम्।

,, ४ ग. ततः प्रविशति पारिग्राहिकश्रीपाल इति समस्तः पाठः।

,, २१ ग. गुणैर्न गृह्यामहे इति पाठः।

४० २० ग. गूर्जरेश्वरस्य सभेति लेखः।

४२ २२ ग. विश्राणैर्मुनितामपीयत इति युक्ततरः पाठः।

४३ १४ ग. गउडं नडीय गडवडीय, परिखुडिय, मालवीय, कन्नउज पइट्टिय, विसल्ल सहारु गुव्व गलिउ सुरुग्गमि एवं रीत्या तत्र २ पाठो दृश्यते।

४४ १८ ग. गाङ्गिलप्रभृतिविभवतश्चेत्येव पाठः।

४७ १ ग. विकत्थनमिति युक्तः पाठः।

४९ २४ ग. निरुञ्छनीकृत्येत्येव पाठो युक्तः।

५१ १६ ग. भवदागमनम् इति पाठः।

॥ इति ॥

